आहो प्रश्नविचारयोः ॥ ६९ ॥

प्रश्ने—'आहो किमेषा सुतनुर्विरौति' ॥
विचारे—'किं तावत्सरसि सरोजमेतदारा-
दाहोश्विन्मुखमवभाषते युवत्याः' ॥

सह साहश्यसंबन्धयौगपद्यसमृद्धिषु ॥
साकल्ये विद्यमाने च

संबन्धे—'पण्डितैश्च विनीतैश्च धर्मज्ञैर्नयशालिभिः ।
तिष्ठेद्धि बन्धनस्थोपि न तु राज्ये खलैः सह' ॥
सादृश्ये ( इवार्थे )—'सिक्ता इवामृतजलेन मुहुर्जनानां
कांतिच्छिदो वनवनस्पतयस्तदानीम् ।
शाखावसक्तवसनाभरणाभिरामाः
कल्पद्रुमैः सह विचित्रफलैर्विरेजुः' ॥
यौगपद्ये—'रघुर्भृशं वक्षसि तेन ताडितः
पपात भूमौ सह सैनिकाश्रुभिः' ॥
समृद्धौ—'समद्रम्' ॥
साकल्ये—'सतृणमभ्यवहरति' ॥
विद्यमाने—'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' ॥

हीही विस्मयहास्ययोः ॥ ७० ॥

द्वयोः—'हीही संपन्ना मे प्रियवयस्य मनोरथाः' ॥

ननु च प्रश्ने दुष्टोक्तौ सम्यग्वादे स्तुतावपि ॥

प्रश्ने—'ननु च विप्रतिषिद्धमेतत्' ॥
दुष्टोक्तौ—'ननु च द्वयेषामित्यपशब्दोयम्' ॥
सम्यग्वादे—'ननु च एवमेवैतत्' ॥
स्तुतौ—'ननु च कोस्य समः सुकृती भुवि' ॥

अपष्ठु चारौ निर्दोषे

द्वयोः—'तव धर्मराज इति नाम कथमिदमपष्ठु पठ्यते ।
भौमदिनमभिदधत्यथ वा भृशप्रशस्तमपि मङ्गलं जनाः' ॥

किमुत प्रश्नवादयोः ॥ ७१ ॥

विकल्पेऽतिशये वापि

प्रश्ने—' प्रहरविरतौ मध्ये चाह्नस्ततोपि परेण वा ' ॥
किमुत सकले याते चाह्नि त्वमद्य समेष्यसि ' ॥

वादे—' नित्यः शब्दः किमुतानित्यः ' ॥

विकल्पे—' किं वा विद्याधरोयं किमुत सुरपतिः ' ॥

अतिशये—' यद्दास्यमप्यस्य लभेत नारी
सा स्यात्कृतार्था किमुताङ्कशय्याम् ' ॥

पुरस्तात्प्रथमेऽग्रतः ॥

पूर्वस्यां च पुरार्थे च

प्रथमे—' अनुचितमिति मत्वा तत्पुरस्तान्निरस्तम् ' ॥

अग्रतः—' रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्तात् ' ॥

पूर्वस्यां दिशि—' पुरस्तादुदयः पश्चात्तथैवास्तमयो ध्रुवः ।
व्यभिचारो न चेदस्ति तत्र का परिदेवना ' ॥

अभीक्ष्णं शीघ्रप्रकर्षयोः ॥ ७२ ॥

पौनःपुन्ये सन्तते च

शीघ्रप्रकर्षयोः—' तक्ष्णोतीव तथाम्योऽभीक्ष्णं तीक्ष्णाक्षरक्षारैः ' ॥

संततपौनःपुन्ययोः—' अभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम् ' ॥

अवश्यं निश्चयनित्ययोः ॥

निश्चये—' अवश्यं यातारश्चिरतरमुषित्वापि विषयाः ' ॥

नित्ये ( शाश्वते )—' अवश्यं पृथ्वीयं क्षितिपतिसहस्राणि तु ययुः ' ॥

नित्ये ( अनवरते )—' अवश्यं कर्तव्यं शयनमशनं च द्वयमपि ' ॥

इदानीं सांप्रतं वाक्यालंकारे ॥

सांप्रतमित्यस्यार्थे—' इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ' ॥

वाक्यालंकारे—' इदानीं भो दानं वितरसि कथं न त्वमधुना ' ॥

तद्दिनं पुनः ॥ ७३ ॥

दिनमध्ये प्रतिदिने

द्वयोः–'देवार्चां तद्दिने कुर्यात् ' ॥

सांप्रतं तूचितेऽधुना ॥

द्वयोः–' प्रत्याहर्तुमुपक्रमः परमितो नः सांप्रतं सांप्रतम् ' ॥

समया निकषेवान्तर्निकटे च

द्वयोः–' गुणदोषाभिव्यक्तिर्वचसां संजायते सतः समया ।
प्रादुःषन्ति विशेषा हेम्नां निकषोपलं निकषा ' ॥

अन्तरा पुनः ॥ ७४ ॥

विनार्थे संनिधौ मध्ये

विनार्थे–' न सुखं धर्ममन्तरा ' ॥

संनिधौ मध्ये च–' गतासुरन्तरा दन्ती वरण्डक इवाभवत् ' ॥

अग्रतः प्रथमाग्रयोः ॥ ७५ ॥

प्रथमे–' अग्रजन्मऽग्रतः सृष्टः ' ॥

अग्रे–'अग्रतो बाहुपाशेन केशपाशेन पृष्ठतः ।
पार्श्वतः कर्मपाशेन सर्वतो बन्धनं हि सा' ॥

अन्ततोऽवयवोत्प्रेक्षापश्चमर्थेषु शासने ॥

चतुर्ष्वपि–' किंचिदप्यधीष्वान्ततः प्रज्ञां प्राप्स्यसि' ॥

पुरतोऽग्राद्ययोः

अग्रे–' वक्रे नागरखण्डमस्तु पुरतः प्रेमाकुलाः कुन्तलाः '॥

आद्ये–'भोजने पुरतः पुत्रः संग्रामे पश्चिमः सदा ' ॥

पूर्वेद्युः धर्माहप्रभातयोः ॥ ७६ ॥

द्वयोः–'पूर्वेद्युर्वितरन्ति सन्ततमहो दानं निदानं श्रियाम् ' ॥

अहहेत्यद्भुते खेदे

अद्भुते–'अचिन्त्याः पन्थानः किमपि महतामन्धकरिपो
र्यदक्ष्णोऽभूत्तेजस्तदकृतकथामप्यमदनाम् ।

मुनेरत्रेर्नेत्रादजनि च पुनर्ज्योतिरहह
प्रतेने तेनेदं मदनमयमेव त्रिभुवनम्' ॥

खेदे—'मुदा यत्र प्राणांस्तृणमिव परार्थप्रणयिन-
स्त्यजन्तो लज्जन्ते कियदिति धिया तद्गुणमगात् ।
तृणं प्राणप्रायं त्यजति न जनो यत्र समये
वयं जातास्तत्रेत्यहह कृपणं जीवितमिदम्' ॥

अन्तरेणान्तर्विनार्थयोः ॥

द्वयोः—'तत्ते निहन्तुमवनीं दिवमन्तरेण
त्वामन्तरेण नहि संप्रति कश्चिदीशः' ॥

अहो बतानुकम्पायां खेदामन्त्रणयोरपि ॥ ७७ ॥

अनुकम्पायां खेदे च—'अहो बत महत्कष्टं चक्षुष्मानपि याचते ।
अदृष्टमुखभङ्गस्य युक्तमन्धस्य याचितुम्' ॥

आमन्त्रणे—'सुराः समभ्यर्थयितार एते
कार्यं त्रयाणामपि विष्टपानाम् ।
चापेन ते कर्म न चातिहिंस्र-
महो बतासि स्पृहणीयवीर्यः' ॥

अथ शेषभूताः

आनुकूल्यार्थकं प्राध्वम्
असाकल्ये च चित् चन ।
तु हि च स्म ह वै पादपूरणे
पूजने स्वती ॥ १ ॥
वद् वा यथा तथैवैवं साम्ये
हो ही च विस्मये
स्युरेवं तु पुनर्वै वेत्यवधारणवाचकाः ॥ २ ॥

ॐ पृच्छायाम्

अतीते प्राक्

निश्चयेऽद्धाऽञ्जसा द्वयम् ॥

अतो हेतौ

महः प्रस्थारम्भे

अथ स्वयमात्मनि ॥ ३ ॥

प्रशंसने तु सुष्ठु स्यात्

परश्वः श्वः परेहनि ॥

अद्यात्राह्नि

अथपूर्वेऽह्नीत्यादौ पूर्वेद्युरादयः ॥ ४ ॥

समानेहनि सद्यः स्यात्,

परे त्वह्नि परेद्यवि ।

उभयद्युस्तूभयेद्युः

समे युगपदेकदा ॥ ५ ॥

स्यात्तदानीं तदा तर्हि

यदा यर्हि

अन्यदा

एकदा ।

परुत् परार्य्यैषमोऽब्दे पूर्वे पर्वतरेऽत्र च ॥ ६ ॥

प्रकारेऽन्यथेतरथा कथमित्थं यथा तथा ॥

द्विधा द्वेधा त्रिधा त्रेधाचतुर्धा द्वैधमादि च ॥ ७ ॥

द्विस्त्रिश्चतुः पञ्चकृत्व इत्याद्यावर्तने कृते ॥

दिग्देशकालेपूर्वादौ प्रागुदक् प्रत्यगादयः ॥ ८ ॥

इयन्त इति संख्यातं निपातानां न विद्यते ॥

प्रयोजनवशादेते निपात्यन्ते पदेपदे ॥ ९ ॥

निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः ।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥ १० ॥

इति श्रीहेमचन्द्रविरचिताभिधानचिन्तामणि-अनेकार्थकैरवाकरकौमुदी-व्याख्यास्थोदाहरणसंवलितः स्वोपज्ञाव्ययकाण्डः समाप्तः ॥

इति अव्ययभागः समाप्तः ॥

---

पुस्तक मिलनेका ठिकाना-
खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम्-प्रेस-बम्बई.



॥ श्रीः ॥

# रूपमालायाम् ।

जयपुरीयसंस्कृतपाठशालाध्यापकदाधिमथ-कुदाल-
पण्डितबदरीलालसूनुलवपुरीयप्राच्यविद्यालय-
प्रधानाध्यापकमहामहोपाध्याय पं०
शिवदत्तसंगृहीतायाम्

प्रकीर्णके ३ भागे
प्रयोगविधिसंग्रहः ।

३

शास्त्रिभिः संशोधितः ।

सोऽयम्
क्षेमराज-श्रीकृष्णदास-इत्यनेन
मुम्बय्यां
स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणा-
लयेऽङ्कयित्वा प्रकाशितः ।

संवत १९७८ शके १८४३

॥ श्रीः ॥

# प्रयोगविधिसंग्रहः ।

श्रीगणेशाय नमः ।

प्रथमः पटलः १.

प्रयोगमिच्छता ज्ञातुं ज्ञेयं कारकमादितः ।
संज्ञया षड्विधं भेदास्त्रयोविंशतिधा पुनः ॥ १ ॥

प्रयोगमिच्छतेति ॥ यो यथाविहितं शब्दप्रयोगं ज्ञातुमिच्छति तेन आदितः कारकं संज्ञया षड्विधम् 'कर्तृकर्मकरणसंप्रदानापादानाधिकरणानि षट् कारकाणि' इति ज्ञातुमर्हम् ॥

ननु कथम् 'षट् कारकाणि' इत्युच्यते। संवन्धस्य कारकत्वं नास्ति । कथम्। क्रियान्वयाभावात् । क्रियान्वयशब्देनात्र क्रिमुच्यते । धातोरर्थः क्रिया भवति पचति पठतीत्यादि । तद्भेदाः पुनस्त्रयोविंशतिधा भवन्ति ॥ १ ॥

तत्र पञ्चविधः कर्ता कर्म सप्तविधं भवेत् ।
करणं द्विविधं चैव संप्रदानं त्रिधा मतम् ॥ २ ॥
अपादानं द्विधा चैव तथाधारश्चतुर्विधः ।

तत्रेति ॥ तत्र तस्मिन् त्रयोविंशतिधेति दर्शिते कारकचक्रे पञ्चविधः कर्ता, सप्तविधं कर्म, द्विविधं करणम्, त्रिविधं संप्रदानम्, द्विविधमपादानम्, चतुर्विधमधिकरणं चेति ।

तत्र पञ्चविधः **कर्ता** यथा—स्वतन्त्रकर्त्ता, हेतुकर्ता, कर्मकर्ता, अभिहितकर्ता, अनभिहितकर्ता चेति ॥ **तत्राद्यो** यथा-पुण्यं करोति श्राद्धः, मैत्रीं भजन्ते सन्तः॥ **हेतुकर्ता** यथा-हितं लभयन्ति विनीतान्धीराः । क्लेशादेव लोकं नियमयन्ति । 'तत्प्रयोजको हेतुश्च' इति हेतुसंज्ञा ॥ **कर्मकर्ता** यथा-स्वयमेव मुच्यन्ते कुशलबुद्धयः । स्वयमेव दृश्यन्ते दुष्टजनदोषाः । स्वयमेव छिद्यन्ते प्राकृतजनस्नेहाः। 'कर्मवत्कर्मणा तुल्यक्रियः' इति हि कर्मवद्भावः ॥ **अभिहितकर्ता** यथा-साधवः

परार्थमापादयन्ति 'अभिहिते प्रथमा' इति प्रथमा॥ **अनभिहितकर्ता** यथा-साधुभिरापाद्यन्ते परार्थाः । 'अनभिहिते कर्तरि' इति तृतीया ॥

**कर्म** सप्तविधं कथम् । ईप्सितं कर्म, अनीप्सितं कर्म, ईप्सितानीप्सितं कर्म, अकथितं कर्म, कर्तृकर्म, अभिहितं कर्म, अनभिहितं कर्म चेति ॥ तत्रे**प्सितं कर्म** यथा—दुर्विज्ञानमपि धर्मं विज्ञातुं श्रद्दधात्युदारधीः । 'कर्तुरीप्सिततमं कर्म' इति कर्मसंज्ञा॥ ( अनभिहिते कर्मणि द्वितीया ) **अनीप्सितं** यथा-कल्याणमपि धर्मं प्रक्षिपन्ति पापबुद्धयः । विषं भक्षयन्ति क्षुद्राः । 'तथायुक्तं चानीप्सितम्' इति कर्मसंज्ञा ॥ **ईप्सितानीप्सितं** यथा—पायसं भक्षयँस्तत्र पतितं रजोऽपि भक्षयति बालकः ॥ **अकथितं** यथा-गां दोग्धि पयो गोपालकः । यज्ञदत्तं याचते कम्बलं ब्राह्मणः ।ईशितारं भिक्षते सुवर्णमकिञ्चनः।व्रजमवरुणद्धि गां गोपालः। उपाध्यायं पृच्छति शास्त्रं शिष्यः । वृक्षमवचिनोति फलानि दारकः । शिष्यं ब्रवीति धर्मं गुरुः । शिष्यमनुशास्ति शास्त्रमुपाध्यायः । 'अकथितं च' इति कर्मसंज्ञा॥ **कर्तृकर्म** यथा—गच्छति शिष्यो ग्रामम्, गमयति शिष्यं ग्रामं गुरुः। 'गतिबुद्धि' इत्यादिना कर्मसंज्ञा ॥ **अभिहितं** कर्म यथा-कटाः क्रियंते देवदत्तेन ॥ **अनभिहितं** कर्म यथा—कटं करोति देवदत्तः ॥

कतमद्द्विविधं **करणम्** । बाह्यमाभ्यन्तरं चेति ॥ शरीरावयवादन्यद्यत्तद्बाह्यं यथा-दात्रेण लुनाति व्रीहीन्नरः । परशुना छिनत्ति वृक्षं देवदत्तः ॥शरीरावयवाश्रितं **यत्तदाभ्यन्तरम्** । यथा-मनसा पाटलिपुत्रं गच्छति देवदत्तः।चक्षुषा रूपं गृह्णाति नरः। 'साधकतमं करणम्' इत्यनेन करणसंज्ञायां 'कर्तृकरणयोस्तृतीया' इति तृतीया ॥

कतमत्त्रिविधं**सम्प्रदानम्** । प्रेरकमनुमन्तृकमनिराकर्तृकं चेति ॥ तत्र **प्रेरकं** यथा-ब्राह्मणाय गां ददाति धार्मिकः । स हि ब्राह्मणो मनसाद्य गां मह्यं देहि इति प्रेरयति तस्मात्प्रेरकमित्युच्यते ॥ **अनुमन्तृकं** यथा- सूर्यायार्घ्यं ददाति पुरुषः । स सूर्यो न प्रेरयति न निराकरोति तस्मादनुमन्तृकः ॥ **अनिराकर्तृकं** यथा--पुरुषोत्तमाय पुष्पं ददाति पुरुषः । स पुरुषोत्तमो मह्यं पुष्पं न ददातीति

---

१ सूर्यस्य त्वनिराकर्तृत्वमेव युक्तम् । पुरुषोत्तमतो वैलक्षण्याभावात् ॥ कस्यचिदुपाध्यायस्यैव नामेति वा कल्पनीयम् ॥

न प्रार्थयते, नानुमन्यते, न निराकरोति तस्मादनिराकर्तृकमित्युच्यते । 'कर्मणा यमभिप्रैति-' इति संप्रदानसंज्ञायाम् 'चतुर्थी संप्रदाने' इति चतुर्थी ॥ २ ॥

कतमद्द्विविधमपादानम् । चलमचलं चेति ॥ तत्र चलं यथा—धावतो रथात्पतति सारथिः । परिधावतो हस्तिनोऽङ्कुशं धारयन्पतत्याधोरणः ॥ अचलं यथा—ग्रामादागच्छति देवदत्तः । पर्वतादवतरन्ति महर्षयः । 'ध्रुवमपायेऽपादानम्' इत्यपादानसंज्ञायाम् 'अपादाने पञ्चमी' इति पञ्चमी ॥

कतमच्चतुर्विधमधिकरणम् । व्यापकमौपश्लेषिकं वैषयिकं सामीपिकं चेति॥ तत्र व्यापकं यथा—तिलेषु तैलं व्याप्तम् । औपश्लेषिकं यथा—कटे आस्ते पुरुषः । शकटे आस्ते ब्राह्मणः । वैषयिकं यथा—वनेषु शार्दूला वसन्ति ॥ सामीपिकं यथा—नद्यां वसति घोषः । 'आधारोऽधिकरणम्' इत्यधिकरणसंज्ञायां 'सप्तम्यधिकरणे च' इति सप्तमी ॥

**करोति कारकं सर्वं तत्स्वातन्त्र्यविवक्षया ॥ ३ ॥**

करोतीति कारकमित्यन्वर्थसंज्ञा, तर्हि कर्तैव कारकसंज्ञो भवति नेतरे । अत्रोच्यते । तान्यपि कारकाण्येव, कुतः, तद्व्यापारेति स्वातन्त्र्यविवक्षायां प्रतिकारकं स्वातन्त्र्यं विवक्ष्यते । अतः कर्मकरणसंप्रदानापादानाधिकरणानामपि कारकत्वं सिद्धम् ॥ ३ ॥

**तत्र कर्तर्यभिहिते प्रथमैव विधीयते ।**
**तृतीया वाऽथं वा षष्ठी स्मृताऽनाभिहिते द्विधा ॥ ४ ॥**

तत्रेति ॥ तत्र कर्तृकर्मकरणसंप्रदानापादानाधिकरणेषु मध्ये अभिहिते कर्तरि प्रथमैव भवति । यथा । पचत्योदनं देवदत्तः ॥ अनभिहिते कर्तरि द्वे विभक्ती भवतः । तृतीया वा अथवा षष्ठीति । तत्र तृतीया यथा । ओदनः पच्यते देवदत्तेन । 'कर्तृकरणयोस्तृतीया' इति तृतीया । षष्ठी यथा—परलोकहितस्य सेवितव्यो धर्मः । परलोकहितेन वा सेवितव्यो धर्मः । 'कृत्यानां कर्तरि वा' इति षष्ठी ॥ ४ ॥

**तथा कर्मण्यभिहिते विभक्तिं विद्धि पूर्विकाम् ।**
**अनुक्ते प्रथमां हित्वा पञ्चमीं सप्तमीं तथा ॥ ५ ॥**

तथेति ॥ यथाऽभिहिते कर्तरि प्रथमा तथा कर्मण्यभिहिते प्रथ-

मैव भवति । यथा ओदनः पच्यते देवदत्तेन । आहारो दीयते देवदत्तेन ॥ अनुक्त इति ॥ अनुक्ते कर्मणि प्रथमां पञ्चमीं सप्तमीं वर्जयित्वा शेषाश्चतस्रो विभक्तयो भवन्ति । काः शेषाः । द्वितीया, तृतीया, चतुर्थी, षष्ठी चेति ॥ तत्र द्वितीया यथा—ग्रामं गच्छति पुरुषः 'कर्मणि द्वितीया' तृतीया यथा—पुत्रेण सञ्जानीते पिता । पुत्रसञ्जानीत इत्यर्थः । 'संज्ञोन्यतरस्यां कर्मणि' इति तृतीया॥चतुर्थी यथा—ग्रामाय व्रजति पुरुषः। 'गत्यर्थकर्मणि' इति चतुर्थी॥ षष्ठी यथा—कटस्य कारको देवदत्तः । 'कर्तृकर्मणोः कृति ' इति षष्ठी ॥५॥

तृतीया पञ्चमी चैव षष्ठी च करणे त्रिधा ।

तृतीयेति ॥ तृतीया यथा—परशुना वृक्षं छिनत्ति देवदत्तः।'कर्तृकरणयोस्तृतीया' इति तृतीया॥पञ्चमी यथा—स्तोकान्मुक्तः स्तोकेनमुक्त इत्यर्थः।'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य' इति पञ्चमी ॥ षष्ठी यथा—घृतस्य संजानीते मित्रं घृतेन मित्रं प्रेक्षत इत्यर्थः । 'ज्ञोविदर्थस्य करणे' इति षष्ठी ॥

षष्ठी चतुर्थी तृतीया संप्रदाने तथा त्रिधा ॥ ६ ॥

षष्ठीति । षष्ठी यथा—पुरुषेण मृगश्चन्द्रमसो दातव्यः । चंद्रमसे दातव्य इत्यर्थः । ' चतुर्थ्यर्थे बहुलं छन्दसि ' इति संप्रदाने षष्ठी ॥ चतुर्थी यथा—क्षुधितायौदनं ददाति देवदत्तः । 'चतुर्थी संप्रदाने' इति चतुर्थी ॥ तृतीया यथा—दास्या मालां संप्रयच्छते । युवा दास्यै मालां ददातीत्यर्थः । 'समस्तृतीया—' इतिसूत्रे ' दाणश्च सा चेच्चतुर्थ्यर्थे ' इति तृतीया उभयमनेन संभाव्यते । तृतीयाविभक्तिरात्मनेपदविधानं च । यदयं योगस्तृतीयायुक्ताद्दाणः ' दाणश्च सा चेच्चतुर्थ्यर्थे 'इत्यात्मनेपदमनुशास्ति—' अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति वक्तव्यम् ' । अशिष्टव्यवहारो धूर्तव्यवहारः ॥ ६ ॥

पञ्चमी खल्वपादाने वर्तते न ततोऽन्यथा ।
सप्तम्येवाधिकरणे कारकस्यैव संग्रहः ॥ ७ ॥

पञ्चमी इति ॥ पंचमी यथा—पर्वतादवतरन्ति महर्षयः । अपादाने पञ्चमी॥ सप्तम्येवेति । सप्तमी यथा—ग्रामे वसति । 'सप्तम्यधिकरणे च ' इति सप्तमी ॥

**कारकस्येति** । दिङ्मात्रं प्रदर्शितम् ॥ कारकसंग्रहो विस्तरेण वृत्त्यादिषु द्रष्टव्य इति ॥

इति श्रीवररुचिकृते प्रयोगविधिसंग्रहे प्रथमः पटलः ॥ १ ॥

---

## द्वितीयः पटलः २.

अथ लक्षितोऽभिहितानभिहितयोः स्वभावः । कियन्तस्तदभिधायकाः, अनभिधायका वा उच्यन्ते—

**समासस्तद्धितास्तिङ्कृच्चत्वारोस्याभिधायकाः ।**
**त एवानभिसंबन्धे भवन्त्यनभिधायकाः ॥ १ ॥**

**समास इति** । अस्यामवस्थायामेव विधायका उच्यन्तेऽकर्मणा कर्त्रा वा अभिसंबन्धे अभिधायका उच्यन्ते ।

ताभ्यामेव कर्मकर्तृभ्यामनभिसंबन्धेऽत एव चत्वारोऽनभिधायका उच्यन्ते ।

**षट् समासाश्च संक्षेपादष्टाविंशतिधा पुनः ।**
**नित्यानित्यत्वयोगेन लुगलुक्त्वेन च द्विधा ॥ २ ॥**

**षडिति** । तत्पुरुषः, कर्मधारयः, बहुव्रीहिः, द्विगु,ः द्वंद्वः, अव्ययीभावश्चेति ॥ त एव विस्तरेणाष्टाविंशतिधा भवन्ति ॥ पश्चात्तद्विभागं वक्ष्यामः॥

**नित्येति** । द्विविधः समासो भवति । नित्योऽनित्यश्चेति ॥

**नित्यः**—प्रकर्षेण वरः प्रवरः । कुम्भं करोतीति कुम्भकारः । यदि नित्यसमासोऽयम् । कथम् ' कुम्भंकरोति ' इति वाक्यं क्रियते । नैष दोषः, अपरशब्देनाप्यर्थः प्रतिपाद्यते । यथा स्त्रीष्वधिकृत्य प्रवर्तते । अधिस्त्रीति । ' कर्मण्यण् ' इत्यण् ' उपपदमतिङ् ' इति समासः ॥

**अनित्यसमासो** यथा—राज्ञः पुरुषो राजपुरुष इति वा ब्राह्मणस्य कम्बलो ब्राह्मणकम्बल इत्यादि षष्ठीसमासे अनित्यसमासः । विभाषितत्वादनित्यत्वमुच्यते॥

**लुगिति** ॥ **लुक्समासो** यथा—कष्टं श्रितः कष्टश्रितः । ' द्वितीया श्रितातीत–' इति समासः । ' कृत्तद्धित ' इति प्रातिपदिकसंज्ञायाम् ' सुपो धातु–'इति सुपो लुक् ॥

**अलुक् समासो** यथा--कण्ठे कालो यस्य स कण्ठेकालः । उरसि लोमानि यस्य स उरसिलोमा । ' सप्तम्युपमानपूर्व' इति समासः । ' कृत्तद्धित'

इति प्रातिपदिकसंज्ञायां 'सुपो धातु-' इति लुकि प्राप्ते 'अलुगुत्तरपदे' इत्यधिकृत्य 'अमूर्धमस्तकात्स्वाङ्गादकामे' इत्यलुक्समासः ॥ २ ॥

तत्राष्टधा तत्पुरुषः सप्तधा कर्मधारयः ।
सप्तधा च बहुव्रीहिर्द्विगुराभाषितो द्विधा ॥ ३ ॥
द्वन्द्वश्चतुर्विधो ज्ञेयोऽव्ययीभावो द्विधा मतः ॥
तेषां पुनः समासानां प्राधान्यं स्याच्चतुर्विधम् ॥ ४ ॥

**तत्रेति** श्लोकद्वयम् । प्रथमादिविभक्तिभिः सप्तविधः, नञा चाष्टम इति ॥ तत्र **प्रथमातत्पुरुषो** यथा-पूर्वः कायस्य--अपरो वा--पूर्वकायः । अपरकायः । 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इति समासः । अर्धं पिप्पल्याः अर्धपिप्पली कोशातक्या वा अर्धकोशातकी । 'अर्धं नपुंसकम्' इति समासः ॥ द्वितीयं भिक्षायाः--द्वितीयभिक्षा भिक्षाद्वितीयम् । एवं तृतीयादि । 'द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्' इति समासः ॥ प्राप्तो जीविकाम्-प्राप्तजीविकः । एवमापन्नजीविकः । 'प्राप्तापन्ने-' इति समासः ॥ कस्मात्प्रथमातत्पुरुष उच्यते। पूर्वपदस्य प्रथमान्तत्वात् । या विभक्तिः पूर्वपदस्य भवति स विशेषित उच्यते अतः प्रथमा तया विभक्त्या विशेषितत्वात् प्रथमातत्पुरुष इत्युच्यते ॥

**द्वितीयातत्पुरुषो** यथा-वृक्षं श्रितः-वृक्षश्रितः । कान्तारमतीतः-कान्तारातीतः । नरकं पतितो- नरकपतितः । ग्रामं गतो- ग्रामगतः । शरमत्यस्तः-शरात्यस्तः । तरङ्गमत्यस्तः-तरङ्गात्यस्तः । सुखं प्राप्तः--सुखप्राप्तः । सुखमापन्नः-सुखापन्नः । 'द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति समासः । वर्षं भोग्यः--वर्षभोग्यः । प्रयोजनं प्रेरितो यः प्रयोजनप्रेरितः-- । 'कालाध्वनोरत्यन्तसंयोगे इति द्वितीया । 'अत्यन्तसंयोगे च' इति द्वितीयासमासः ॥

**तृतीयातत्पुरुषो** यथा--शंकुलया खंडः--शंकुलाखण्डः । धान्येनार्थो धान्यार्थः--'तृतीया तत्कृतार्थेन गुणवचनेन' इति समासः । मासेन पूर्वो--मासपूर्वः । मात्रा सदृशः- मातृसदृशः। पित्रा समः--पितृसमः। माषेणोनम्--माषोनम्। माषेण विकलम्--माषविकलम् । वाचा कलहः- वाक्कलहः । वाचा निपुणः--वाङ्निपुणः । गुडेन मिश्रः । गुडमिश्रः । आचारेण श्लक्ष्णः--आचारश्लक्ष्णः । 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः' इति समासः ॥

चतुर्थीतत्पुरुषो यथा—यूपाय दारु—यूपदारु । कुण्डलाय हिरण्यम्—कुण्डलहिरण्यम् । 'तादर्थ्ये चतुर्थी वाच्या' इति चतुर्थी । 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' इति समासः । 'अर्थेन नित्यसमासवचनं सर्वलिंगता वक्तव्या'। ब्राह्मणाय सूपः—ब्राह्मणार्थः सूपः । ब्राह्मणायेयं भूः—ब्राह्मणार्था भूः । ब्राह्मणाय इदं पयः—ब्राह्मणार्थं पयः। ब्राह्मणाय बलिः—ब्राह्मणबलिः । विप्राय हितम्—विप्रहितम् । द्विजाय सुखम्-द्विजसुखम् । गवे रक्षितम् गोरक्षितम् इत्यादि । 'चतुर्थीतदर्था—' इति समासः ॥

पञ्चमीतत्पुरुषो यथा—सिंहाद्भयम् सिंहभयम्।'पञ्चमी भयेन'इति समासः॥ अर्थादपेतः—अर्थापेतः । सुखादपोढः सुखापोढः 'अपेतापोढमुक्तपतितापत्रस्तैः-' इति समासः ॥

षष्ठीतत्पुरुषो यथा—वृक्षस्य मूलं वृक्षमूलम् । 'षष्ठी' इति समासः । ब्राह्मणस्य याजको—ब्राह्मणयाजकः । 'याजकादिभिश्च' इति समासः ॥

सप्तमीतत्पुरुषो यथा—अक्षेषु शौण्डः—अक्षशौण्डः 'सप्तमी शौण्डैः' इति समासः। पाटलिपुत्रे सिद्धः-पाटलिपुत्रसिद्धः । 'सिद्धशुष्कपक्वबन्धैश्च' इति समासः ॥

नञ्तत्पुरुषो यथा—न ब्राह्मणः—अब्राह्मणः।'नञ्' इति समासः । सप्तधा कर्मधारयः कतमः । विशेषणपूर्वपदः, विशेष्यपूर्वपदः, विशेषणोभयपदः, उपमानपूर्वपदः उपमानोत्तरपदः, संभावनापूर्वपदः; अवधारणापूर्वपदश्च इति ।

तत्र विशेषणपूर्वपदो यथा—नीलं च तत् उत्पलं च—नीलोत्पलम् ॥

विशेष्यपूर्वपदो यथा—वैयाकरणश्चासौ खसूचिश्च—वैयाकरणखसूचिः । 'विशेषणं विशेष्येण बहुलम्' इति समासः ॥

तृतीयो यथा— शीतं च तत् उष्णं च—शीतोष्णम् ॥

चतुर्थो यथा—शंखवत् पाण्डुरः शंखपाण्डुरः ।

पञ्चमो यथा—नरःसिंह इव—नरसिंहः । पुरुषो वृषभ इव—पुरुषवृषभः । 'उपमितं व्याघ्रादिभिः' इति समासः ॥

षष्ठो यथा—गुण इव बुद्धिः—गुणबुद्धिः । पुत्र इव ग्रहणम्—पुत्रग्रहणम् ॥ 'विशेषणं विशेष्येण—'इति समासः ॥

सप्तमो यथा–गुण एव धनम्–गुणधनम् । सुहृद्बन्धुः । 'मयूरव्यंसका–' इति समासः ॥

सप्तधा च बहुव्रीहिः–द्विपदः, बहुपदः, संख्योत्तरपदः, संख्योभयपदः, सहपूर्वपदः व्यतिहारलक्षणः, दिगन्तराललक्षणश्च इति ॥ आरूढो वानरोयं वृक्षं भवत्यारूढवानरो वृक्षः । इति द्विपदः । निर्जितः कामो येन सः–निर्जितकामः शिवः। उपनीतं भोजनं यस्मै–उपनीतभोजनः। निष्क्रान्तो जनो यस्मात् सः–निष्क्रान्तजनः । शुक्लः पटो यस्य सः–शुक्लपटः । उषितः विभवो यस्मिन् सः–उषितविभवः । 'शेषो बहुव्रीहिः' इत्यधिकृत्य 'अनेकमन्यपदार्थे' इति समासः ॥

बहुपदो यथा–पराक्रमेण उपार्जिता सम्पत् येन सः–पराक्रमोपार्जितसंपत् । पूर्ववत्समासः ॥

तृतीयो यथा–उप समीपे दशानां ये संति ते–उपदशाः । उपविंशाः ॥

तुरीयो यथा–द्वौ वा त्रयो वा–द्वित्राः । 'संख्ययाव्यया–' इति समासः । 'बहुव्रीहौ संख्येये–' इति डच् समासान्तः ॥

पञ्चमो यथा–सह मूलेन उद्धृततरुः–समूलोद्धृततरुः । 'तेन सहेति–' इति समासः ।'वोपसर्जनस्य' इति सह–शब्दस्य वा सभावः ॥

व्यतिहारलक्षणो यथा–केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि। दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं प्रवृत्तं दण्डादंडि । 'तत्र तेनेदम्–' इति समासः। 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । 'इच्कर्मव्यतिहारे' इति इच्समासान्तः । 'यस्येति च' इति अकारलोपः । 'तिष्ठद्गुप्रभृतीनि च' इति अव्ययीभावः।'अव्ययीभावश्च' इति अव्ययसंज्ञायाम्'अव्ययादाप्सुपः' इति सुपो लुक्॥

दिगन्तराललक्षणो यथा–दक्षिणस्याः पूर्वस्याश्च दिशोर्यदंतरालं सादक्षिणपूर्वा । उत्तरपूर्वा । 'दिङ्नामान्यन्तराले' इति समासः । सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः ॥

द्विगुर्द्विविधः । एकवद्भावी अनेकवद्भावी च इति। एकवद्भावी यथा–त्रीणी शृङ्गाणि समाहृतानि इति त्रिशृङ्गम् । पञ्चमूली। 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः । 'संख्या पूर्वो द्विगुः' इति द्विगुसंज्ञायाम् 'द्विगुरेकवचनम्'

इत्येकवचनम्। 'स नपुंसकम्' 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाषितः' इति स्त्रीलिंगतायां 'द्विगोः' इति ङीष्। त्रिशृङ्गादिभ्यस्तु न भवति। 'पात्रादिभ्यः प्रतिषेधो वक्तव्यः'।

**अनेकवद्भावी** यथा—चतस्रो दिशश्चतुर्दिशः। त्रयो लोकास्त्रिलोकाः। 'दिक्संख्ये संज्ञायाम्' इति समासः।

**द्वन्द्वश्चतुर्विधो ज्ञेयः** कथं—समुच्चयः, अन्वाचयः, इतरेतरयोगः, समाहारश्च इति। तत्रसमुच्चयान्वाचयोरसामर्थ्यात्समासो नास्ति 'समर्थः पदविधिः' इत्यधिकारात्॥

**समुच्चयो** यथा—देवदत्तः पचति यज्ञदत्तश्च॥

**अन्वाचयो** यथा—भिक्षामट गां चानय॥

**समाहारो** यथा—शंखश्च पटहश्च शंखपटहम्। 'द्वन्द्वश्च प्राणितूर्य—' इति एकवद्भावः। 'स नपुंसकम्'॥

**इतरेतरयोगो** यथा—देवदत्तश्च यज्ञदत्तश्च देवदत्तयज्ञदत्तौ 'चार्थे द्वन्द्वः'॥

**अव्ययीभावो द्विधा मतः**—नामपूर्वपदः अव्ययपूर्वपदोपि॥ तत्राद्यो यथा—शाकस्य मात्रा शाकप्रति। फलप्रति। 'सुप्प्रतिना मात्रार्थे' इति समासः॥

द्वितीयो यथा—कुम्भस्य समीपे वर्तते उपकुम्भम्। 'अव्ययं विभक्ति—' इति समासः॥ क्रममनतिक्रम्य वर्तते यथाक्रमम्। ये ये वृद्धाः यथावृद्धम्॥ 'यथाऽसादृश्ये' इति समासः। यावदमत्रं ब्राह्मणानामन्त्रयस्व इति। यावन्ति अमत्राणि सन्ति तावतो ब्राह्मणान् आमन्त्रयस्व। 'यावदवधारणे' इति समासः॥

**तेषामिति**। पूर्वपदार्थप्रधानः, उत्तरपदार्थप्रधानः, अन्यपदार्थप्रधानः, उभयपदार्थप्रधानश्च इति समासश्चतुर्द्धा। **तत्पुरुषो** द्विधा। पूर्वपदार्थप्रधानः, उत्तरपदार्थप्रधानश्च इति। **पूर्वो** यथा—पुरुषवृषभः। **उत्तरो** यथा—नीलोत्पलम्॥

---

१ अत्रेदं चिन्त्यम्। 'तद्धितार्थोत्तरपदसमाहारे च' इत्युत्तरम् 'संख्यापूर्वो द्विगुः' इति सूत्रप्रणयनात्तद्धितार्थाद्यङ्गीकारेणैव द्विगुसंज्ञाविधानात्॥ तस्मात्तद्धितार्थान्तर्भावेण पञ्चकपालः उत्तरपदे परतः द्विमासजातः इत्यत्र 'द्विमास' इति खण्डे वोदाहर्तव्यः॥

बहुव्रीहिर्द्विप्रधानः अन्योभयपदार्थप्रधानः इति ॥ अन्यपदार्थप्रधानो यथा–चित्रगुर्देवदत्तः ॥ द्वितीयो यथा–द्वित्राः ।

द्वन्द्व उभयपदार्थप्रधान इति । यथा–शंखपटहम्[1] ॥

द्विगुरुत्तरपदार्थप्रधान एव । यथा–त्रिशृङ्गम् ॥

अव्ययीभावश्च त्रिप्रधानः । पूर्वोत्तरान्यपदार्थप्रधान इति । पूर्वपदार्थप्रधानो-यथा–उपकुम्भम् ॥ उत्तरपदार्थप्रधानो यथा–शाकप्रति ॥ अन्यपदार्थप्रधानो यथा–उन्मत्ता गंगा यस्मिन् देशे स उन्मत्तगङ्गं देशः । 'अन्यपदार्थे च संज्ञायाम्' इति समासः । 'स्त्रियाः पुंवद्भाषित–' इति पुंवद्भावः ।

इति समासलक्षणम् ॥

---

अथ प्रस्तावसरं तद्धितलक्षणमुच्यते ।

**सामान्याव्ययभावाख्यस्त्रिविधस्तद्धितो मतः ॥**
**पदानां तु समर्थानां प्रथमाद्वा प्रसूयते ॥ १ ॥**

**सामान्यवृत्तिरिति** । तद्धितःसामान्यवृत्तिः, अव्ययसंज्ञः, भाववचनश्च इति त्रिविधः ॥ **पदानामिति** । अनेकानां पदानां परस्परसमर्थानां प्रथमादेव पदात्तद्धितप्रत्ययः प्रसूयते । तत्र **सामान्यवृत्तिस्तावदुच्यते** । मतुप् १ लच् २ इलच् ३ शः ४ नः ५ उरच् ६ णः ७रः ८ वः ९ वलच् १० इनिः ११ ठन् १२ विनिः १३ युस् १४ ग्मिनिः १५ आलच् १६ आटच् १७ इनच् १८ आरकन् १९ आलुच् २० चेलुः २१ चूलः २२ ऊलः २३ अण् २४ वुन् २५ खञ् २६ अञ् २७ इञ् २८ फक् २९ यञ् ३० ढक् ३१ ऐरक् ३२ ढूक् ३३ आरक् ३४ घः ३५ खः ३६ ण्यः ३७ यत् ३८ इत् ३९ इतच् ४० अनङ् ४१ चणप् ४२ चुञ्चुप् ४३ इष्ठन् ४४ ईयसुन् ४५ तरप् ४६ आम् ४७ तमप् ४८ कल्पप् ४९ देश्यः ५० देशीयर् ५१ जातीयर् ५२ द्वयसच् ५३ दघ्नच् ५४ मात्रच् ५५ ढक् ५६ इति षट्पञ्चाशत् प्रत्यया भवन्ति । तत्र **मतुप्** यथा–गुणो यस्य यस्मिन् वाऽस्ति

---

१ समाहारस्य विशेषणत्वमङ्गीकृत्येदमुक्तम् ॥

गुणवान् । गुणवती । गुणवत्कुलम् । ' तदस्यास्त्यस्मिन्निति मतुप् ' । 'मादुपधायाश्चमतोर्वोऽयवादिभ्यः ' इति मस्य वः ॥

लच् । चूडा यस्यास्ति यस्मिन् वा चूडालः । 'प्राणिस्थादातो लजन्यतरस्याम् ' इति लच् । वत्सलः अंशलः । ' वत्सांशाभ्यां कामबले' इति लच् ।

इलच् । फेनो यस्यास्ति फेनिलः । ' फेनादिलच ' इति इलच् । एवं तुन्दिलः । ' तुन्दादिभ्य इलच ' इति इलच् ॥

शः । लोमानि यस्य संति लोमशः ॥

नः । पामा यस्यास्ति पामनः ( इलच् ) ॥ पिच्छं यस्यास्ति पिच्छलः । 'लोमादिपामादिपिच्छादिभ्यः शनेलचः ' ॥

उरच् । दन्ता उन्नता यस्य सः दन्तुरः ॥ ' दन्त उन्नत उरच्'

णः । प्रज्ञा यस्यास्ति स प्राज्ञः । श्रद्धा यस्यास्तीति श्राद्धः । आर्चः वार्त्तः । ' प्रज्ञाश्रद्धाऽर्चावृत्तिभ्यो णः' ।

रः । मधु यस्यास्ति स मधुरः ' ऊषसुषिमुष्कमधो रः ' ॥

वः । केशवः ' केशाद्वोऽन्यतरस्याम् ' । वप्रकरणे मणिहिरण्ययोरुपसंख्यानम् । मणिर्यस्यास्ति स मणिवः । एवं हिरण्यवः ॥

वलच् । रजो यस्यास्ति रजस्वला । 'रजःकृष्यासुतिपरिषदो वलच् ॥

इनिर्यथा-धनमस्यास्ति धनी ॥

ठन् । धनमस्यास्ति धनिकः । 'अत इनिठनौ' 'ठस्येकः '॥

विनिर्यथा-यशो यस्यास्ति यशस्वी । 'अस्मायामेधास्रजो विनिः' ॥

युस् । ऊर्णा यस्यास्ति ऊर्णायुः । 'ऊर्णाया युस्' ॥

ग्मिनिः । वागस्यास्ति वाग्मी । ' वाचो ग्मिनिः' । 'सौ च'इति दीर्घः॥

आलच् । यो बहु असंबद्धं भाषते स वाचालः ॥

आटच् । यो बहु असंबद्धं भाषते स वाचाटः । 'आलजाटचौ बहुभाषिणि' ॥

इनच् । फलानि यस्य संति स फलिनः, बर्हिणः । 'फलबर्हाभ्यामिनच् वक्तव्यः' ॥

**आरकन्** । शृङ्गं यस्यास्ति स शृङ्गारकः । 'शृङ्गवृन्दाभ्यामारकन् वक्तव्यः'

**आलुच्** । निद्रालुः। तन्द्रालुः। श्रद्धालुः । 'निद्रातन्द्राश्रद्धाभ्य आलुच्'[1] । शीतालुः । उष्णालुः । तृप्रालुः। 'शीतोष्णतृप्रेभ्यस्तन्न सहते इत्यालुच् वक्तव्यः'

**चेलुः** । हिमं न सहते हिमेलुः । 'हिमान्न सहते' इति चेलुः ॥

**चूलः** । बलं न सहते बलूलः 'बलाच्चूलो[2] वक्तव्यः' ॥

**ऊलः** । वातानां समूहः वातूलः । वातं न सहते वा । 'वाताच्चन्न सहते' इति ऊलः ॥

**अण्** । वसिष्ठस्यापत्यं वासिष्ठः । 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इति अण् । उपगोरपत्यं औपगवः । 'प्राग्दीव्यतोऽण्' इत्यधिकृत्य 'तस्यापत्यम्' इत्यण् ॥ आश्वपतम् । 'अश्वपत्यादिभ्यश्च' इत्यण् । जनपदो यस्य निवासो स जानपदः 'सोऽस्य निवासः' ॥ वैयाकरणः 'तदधीते तद्वेद' । 'नय्वाभ्यां पदान्ताभ्याम्' इत्यैजागमः ॥

**वुन्** । क्रममधीते क्रमकः । पदकः । 'क्रमादिभ्यो वुन्'। 'युवोरनाकौ' ॥

**खञ्** । प्रियंगूनां भवनं क्षेत्रं प्रैयंगवीनम् । मौद्गीनम् 'धान्यानां भवने क्षेत्रे खञ्' ॥

**अञ्** । पञ्चालस्यापत्यं पाञ्चालः । वैदेहः 'जनपदशब्दात्क्षत्रियादञ्' ॥ औत्सः । 'उत्सादिभ्योऽञ्' ॥

**इञ्** । दक्षस्यापत्यं दाक्षिः, दाशरथिः । 'अत इञनृपेः' ॥

**फक्** । नडस्यापत्यं नाडायनः । चारायणः । आश्वलायनः । 'नडादिभ्यः फक्' ॥

**यञ्** । गर्गस्य गोत्रापत्यं गार्ग्यः । 'गर्गादिभ्यो यञ्' ॥

**ढक्** । विनताया अपत्यं वैनतेयः । गांगेयः ॥ 'स्त्रीभ्यो ढक्' ॥

**ऐरक्** । चटकाया अपत्यं चाटकैरः । 'चटकाया ऐरक्' ॥

**ढ्रक्** । गोधाया अपत्यं गौधेरः । 'गोधाया ढ्रक्' । 'लोपोव्योः-' इति यलोपः ॥

---

१ भाष्ये तु न तद्दृश्यते । 'हृदयाच्चालुः हृदयालुः' इत्येतत्तु दृश्यते ॥

२ भाष्ये तु 'बलाच्चोलः' इति पठित्वा ऊल एव प्रत्ययो दर्शितः ॥

आरक्-गोधाया अपत्यं गौधारः । 'आरगुदीचाम्' घः । क्षत्रस्याऽपत्यं क्षत्रियः । 'क्षत्राद्घः' इयादेशः ॥

खः । कुलस्याऽपत्यं कुलीनः । 'कुलात्खः' । इनादेशः ॥

ण्यः । कुरोरपत्यं कौरव्यः । 'कुर्वादिभ्यो ण्यः' ॥

यत् । मूर्ध्नि भवो मूर्धन्यः । उरस्यः । दन्त्यः । 'शरीरावयवाद्यत्' ॥

इत् । सुष्टु गन्धो यस्य सुगन्धिः । उद्गन्धिः । 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' कुमुदगन्धिः । कारीषगन्धिः । 'सप्तम्युपमानपूर्वस्य बहुव्रीहेर्वाच्य उत्तरपदलोपश्च' । 'उपमानाच्च' । इति इत्समासान्तः ॥

इतच् । कुसुमानि संजातानि यस्य स कुसुमितो वृक्षः । 'तदस्य संजातं तारकादिभ्य इतच्' ॥

अनङ् । कुण्डप्रमाणं ऊधो यस्याः सा कुण्डोध्नी । ऊधसोऽनङ् । सकारस्यादेशः प्रत्ययसंज्ञा च । 'बहुव्रीहेरूधसो ङीष्' ॥ कुसुममेव धनुर्यस्य स कुसुमधन्वा । 'धनुश्च' इति अनङ् सकारस्य समासान्तः ॥

चणप् । दर्पेण वित्तो दर्पचणः ॥

चुञ्चुप् । शब्देन वित्तः शब्दचुञ्चुः । 'तेन वित्तश्चुञ्चुप्चणपौ' । 'चुटू' इति इत्संज्ञा न भवति । तस्यानित्यत्वात्[1] ॥

इष्ठन् । सर्वे इमे पटवः । अतिशयेन अयमेषां पटुः पटिष्ठः । 'अतिशायने तमबिष्ठनौ' । 'टेः' इति टेर्लोपः ॥ अतिकर्त्ता करिष्ठः । 'तुरिष्ठेमेयस्सु' इति टेर्लोपः ॥ अतिप्रियः प्रेष्ठः । अतिस्थिरः स्थेष्ठः । अतिस्फिरः स्फेष्ठः । वरिष्ठः, बंहिष्ठः, गरिष्ठः, वर्षिष्ठः, त्रपिष्ठः, द्राघिष्ठः, । 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः' आदेशाः स्युः । 'प्रकृत्यैकाच्' इति प्रकृतिभावः । अतिशयेन स्थूलः इति स्थविष्ठः । एवं दविष्ठः । यविष्ठः । ह्रसिष्ठः क्षोदिष्ठः । 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः' । सर्वेषाम् । अतिशयेन बहुः भूयिष्ठः । 'बहोर्लोपो भू च बहोः' इति प्रत्ययेकारस्य लोपः । 'बहुशब्दस्य भूरादेशः' 'इष्ठस्य यिट् च' इति इडागमः । अतिशयेन वृद्धः इति ज्येष्ठः । 'ज्य च' इत्यनुवर्तमाने

---

१ भाष्ये तु 'यकारादि चुञ्चुप्-चणपौ' इत्युक्तम् ।

' वृद्धस्य च ' इति ज्यादेशः । अतिप्रशस्यः श्रेष्ठः । लघुमृदुकृशपृथूनाम् । लघिष्ठः म्रदिष्ठः क्रशिष्ठः प्रथिष्ठः । ' र ऋतो हलादेर्लघोः ' इति ऋकारस्य रादेशः । 'तुरिष्ठेमेयस्सु' इति वर्तमाने 'टेः' इति टेर्लोपः ॥ अन्तिकः—नेदिष्ठः। बाढः । साधिष्ठः । 'अन्तिकबाढयोर्नेदसाधौ ' तनिष्ठः अणिष्ठः श्वेतिष्ठः श्यामिष्ठः । अतिहरितः हरिष्ठः पञ्जरिष्ठः ।

ईयसुन् । द्वाविमौ पटू अतिशयेन अयं अनयोः पटुः । पटीयान् । स्थवीयान् । दवीयान् । यवीयान् । कनीयान् । ' युवाल्पयोः कनन्यतरस्याम्' । ह्रसीयान् । क्षेपीयान् । क्षोदीयान् । प्रेयान् । स्फेयान् । स्थेयान् । वरीयान्। बंहीयान् । गरीयान् । वर्षीयान् । त्रपीयान् । द्राघीयान् । वृन्दीयान् । महीयान् । साधीयान् । लघीयान् । क्रशीयान्। प्रथीयान् । द्रढीयान् । ज्यायान् । ईयसुने ईकारस्यात्वम् । कनीयान् । श्यामः श्यामीयान् । पिञ्जरीयान् । 'द्विवचनविभज्योपपदे तरबीयसुनौ ' ॥

तरप् । अयमनयोरतिशयेन कुमारः कुमारतरः । एवं पटुतरः । मृदुतरः। कृशतरः । लघुतरः । उदीच्याः प्राच्येभ्यः पटुतराः पटीयांसः । ' द्विवचनविभज्योपपदे तरबीयसुनौ' ॥

आम् । अतिशयेन पचति पचतितराम् । जल्पतितराम् । ' तिङश्च'इति तरप् ' किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ' इति आम् । द्रव्यप्रकर्षे तु उच्चैस्तरस्तरुः ॥

तमप् । सर्वासामियमतिमृद्वी मृदुतमा । चपलतमा । ' अतिशायने तमबिष्ठनौ ' ॥

कल्पप् । ईषदिन्द्रो न समाप्यते इन्द्रकल्पः ॥

देश्यः । ईषत्पर्वतो न समाप्यते इति पर्वतदेश्यः मेघः।

देशीयर् । ईषत् राजा न समाप्यते राजदेशीयः 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ' ॥

जातीयर् । पटुप्रकारः पटुजातीयः । मृदुजातीयः । समजातीयः । ' प्रकारवचने जातीयर् ' ॥

द्वयसच् । ऊरुः प्रमाणम् अस्य ऊरुद्वयसं जलम् ।

दघ्नच् । जानुप्रमाणमस्य जानुदघ्नम् ॥

मात्रच् । आस्यं प्रमाणमस्य आस्यमात्रम् । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः'॥

ठक् । द्वारे नियुक्तः दौवारिकः । 'तत्र नियुक्तः' इति ठक् । 'द्वारादीनां च' इत्यैजागमः ॥ अक्षैर्दीव्यति आक्षिकः । खनित्रेण खनति खानित्रिकः । मुष्टिना जयति मौष्टिकः । 'तेन दीव्यति खनति जयति जितम्' इति ठक् । दध्ना संस्कृतं दाधिकम् । 'तेन संस्कृतम्' इति ठक् ॥ मरिचेन संस्कृतम् मारिचिकम् । 'तेन संस्कृतम्' इति ठक् । 'ठस्येकः' । 'किति च' इति आदिवृद्धिः ॥

इति सामान्याख्यस्तद्धितः समाप्तः ॥

---

अव्ययाख्यस्तद्धितः कतमः ॥ तसिल् १, त्रल्, २, अधुना ३, दानीम् ४, दा ५, र्हिल् ६, ह ७, अत् ८, थाल् ९, थम् १०, अस्ताति ११ घस् १२, तल् १३, आरिल् १४, समसण् १५, एद्यवि १६, द्य १७, एद्युस् १८, अउसुच् १९, आति २०, रिल् २१, रिष्टाति २२, एनप् २३, आच् २४, आहि २५, धा २६, ध्यमुञ् २७, धमुञ् २८, एधाच् २९, आम् ३०, इति त्रिंशत्प्रत्ययाः ॥

तसिल् यथा—कस्मादिति कुतः । 'कुतिहोः' । तकारहकारादौ प्रत्यये परे किमः कुः स्यात् सर्वस्मादिति सर्वतः। यस्मात् इति यतः । तस्मात् इति ततः । 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञा । 'त्यदादीनामः'॥'इदम इश्'। अस्मादिति इतः । एतस्मात् अतः । 'एतदोऽन्' इत्यन्भावः । 'तद्धितश्चासर्व'- इति अव्ययसंज्ञा । 'अव्ययादाप्सुपः' इति सुपो लुक् । आदितः। 'अन्येभ्योऽपि दृश्यन्ते' इति वचनात् ।'किंसर्वनामबहुभ्यो द्व्यादिभ्यः' इत्यनेनाधिकृत्य 'पञ्चम्यास्तसिल्'॥

त्रल् । तस्मिन् इति तत्र । एतस्मिन् अत्र। यत्र । बहुत्र । कुत्र । अमुष्मिन् इति अमुत्र । 'सप्तम्यास्त्रल्' । 'अदसोसेः' इति अस्यौत्वं मत्वं च ॥

अधुना । अस्मिन् काले अधुना निपात्यते ॥

दानीम् । अस्मिन्काले इदानीम् । 'दानीं चेति' दानीम् प्रत्ययः । 'इदमः' इति इश् ॥

**दा** । सर्वदा । एकदा । अन्यदा । यदा । तदा सर्वैकान्यकिंयत्तदः काले दा' इति दाप्रत्ययः ॥ सर्वदा । सदा । 'सर्वस्य सोऽन्यतरस्याम्' ।

**र्हिल्** । तस्मिन्काले तर्हि । 'अनद्यतने र्हिलन्यतरस्याम्' । अस्मिन्काले एतर्हि । ' इदमोर्हिल् ' । 'एतेतौ रथोः' इति रेफथयोः एत इत आदेशौ ॥

**ह** । अस्मिन्काले इह ' इदमो हः ' । त्रलोपवादः । ' इदम इश्' । कुह । ' वाह च च्छन्दसि' इति वा हः । 'कु तिहोः' इति किमः कुः ॥

**अत्** । क 'किमोत्' 'क्वाति ' इति । क्वादेशः ॥

**थाल्** । येन प्रकारेण यथा । सर्वथा । 'प्रकारवचने थाल् ' ॥

**थमु** । अनेन प्रकारेण इत्थम् । 'इदमस्थमुः' । थालोऽपवादः । 'एतेतौ रथोः' इति इतादेशः ॥ कथम् । 'किमश्च' इति थम् । 'किमः कः' ॥

**अस्तातिः, अस्** । पूर्वस्यां दिशि वसति पूर्वस्या दिश आगतः पुरः पुरस्तादागतः । पूर्वं रमणीयः पुरः पुरस्ताद्रमणीयः । 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमान्तेभ्यो दिग्देशकालेष्वस्तातिः' । पर्वाधरावराणामसिपुरधवश्चैषाम्' 'अस्ताति च' अस्तातौ च परे पूर्वादीनां पुरादयः स्युः ॥

**द्यस्** । समानेऽह्नि सद्य इति निपात्यते ॥ 'सद्यः परुत् परार्यैषमः' इति समानस्य सभावो द्यस्प्रत्ययश्चाहन्यभिधीयते ॥

**उत, आरिल्** । परुत् । परारिः । पूर्वस्मिन् वत्सरे परुत् । पूर्वतरस्मिन् वत्सरे परारिः । पूर्वपूर्वतरयोः परभावः उदारिलेतौ प्रत्ययौ भवतः । संवत्सरेऽभिधीयते ॥

**समसण्** । अस्मिन् संवत्सरे ऐषमः । इदम् शब्दात्समसण् । इदम इश्भावः । 'तद्धितेष्वचामादेः ' आदिवृद्धिः ॥

**एद्यवि** । परस्मिन् अहनि परेद्यवि । परस्मादेद्यविप्रत्ययः ॥

**द्य** । अस्मिन्नहनि अद्य ॥

**एद्युस्** । पूर्वस्मिन् अहनि पूर्वेद्युः । परेद्युः । अन्येद्युः । अन्यतरेद्युः । इतरेद्युः । अपरेद्युः । उभयेद्युः उत्तरेद्युः 'पर्वान्यन्यतरेतराधरोभयोत्तरेभ्य एद्युस्' ॥

**अतसुच्** । दक्षिणस्मिन् देशे वसति दक्षिणतो वसति । दक्षिणतो गच्छति । 'दक्षिणोत्तराभ्यामतसुच्' ॥

आति । उत्तरस्मिन् देशे वसति उत्तराद्वसति । दक्षिणाद्वसति उत्तरादागतः । ' उत्तराधरदक्षिणादातिः ' इत्यातिः ॥

रिल् । ऊर्ध्वे वसति उपरि वसति ॥

रिष्टाति । ऊर्ध्वे वसति उपरिष्टाद्वसति । ' उपर्युपरिष्टात्' ऊर्ध्वशब्दस्य उपभावः रिल् रिष्टाति एतौ प्रत्ययौ भवतः ॥

एनप् । पूर्वेण देशो रमणीयः । पूर्वदेशो रमणीय इत्यर्थः । ' एनबन्यतरस्यामदूरे पञ्चम्याः ' ॥

आच् । दक्षिणा देशो रमणीयः । ' दक्षिणादाच्' ॥

आहि । दक्षिणस्यां दिशि ग्रामस्य दूरे वसति दक्षिणाहि ग्रामाद्वसति । ' आहिच् दूरे ' ॥

धा । कतिप्रकारः कतिधा । बहुधा । ' संख्यायाः प्रकारे धा ' ॥

ध्यमुञ् । एकधा—ऐकध्यं कुरु । ' एकाद्धो ध्यमुञन्यतरस्याम् ' ॥

धमुञ् । द्वैधम् । त्रैधम् । 'द्वित्र्योश्च धमुञ् ' ॥

एधाच् । द्वेधा । त्रेधा ॥

आम् । ' किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ' । चिरन्तरमेव चिरन्तराम् । सुष्ठुतराम् । अतितराम् ।

इत्यव्ययवाचकतद्धितः समाप्तः ।

भाववाचकः कतमः । त्व, तल्, इमनिच्, ष्यञ्, यत्, यः ढक्, यक्, अञ्, अण्, वुञ्, इत्येकादश प्रत्ययाः ॥

त्वतलौ । ' तस्य भावस्त्वतलौ' । पटोर्भावः पटुत्वम् । पटुता ॥

इमनिच् । गुरोर्भावो गरिमा । पटिमा । अणिमा । तनिमा । स्थविमा । दविमा । महिमा । प्रेमा । क्षेपिमा । बंहिमा । द्राघिमा । भूमा । चेतसो भावः चेतिमा । क्रशिमा ॥

ष्यञ् । शैत्यम् । नैल्यम् । दार्ढ्यम् । सौभाग्यम् । 'वर्णदृढादिभ्यः ष्यञ् च ' । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य ' इति उभयपदवृद्धिः ॥

यत् । स्तेनस्य कर्म स्तेयम् 'स्तेनाद्यन्नलोपश्च' ॥

यः । 'सख्युर्यः' । सख्युर्भावः सख्यम् ॥

ढक् । 'कपिज्ञात्योर्ढक्' । कपेर्भावः कापेयम् । ज्ञातेयम् ।

यक् । 'पत्यन्तपुरोहितादिभ्यो यक्' । बृहस्पतेर्भावः बार्हस्पत्यम् । प्राजापत्यम् । सैनापत्यम् । पौरोहित्यम् ॥

अञ् । अश्वस्य भावः आश्वम् । औष्ट्रम् । कौमारम् ।

अण् । त्रिहायनस्य भावः त्रैहायनम् । द्वैहायनम् । चातुर्हायनम् । यौवनम् । स्थाविरम् । 'हायनान्तयुवादिभ्योऽण्' । मुनेर्भावः मौनम् । पार्थम् । मार्दवम् । गौरवम् । 'इगन्ताच्च लघुपूर्वात्' इति अण् ॥

वुञ् ।—'योपधाद्गुरूपोत्तमाद्वुञ्' । रमणीयस्य भावः रामणीयकम् । आचार्यकम् ॥ इति प्रयोगविधिसंग्रहे द्वितीयः पटलः ॥

---

तद्धितप्रयोगमभिधाय तिङ्प्रयोगाभिधानं विधास्यामः ।

तिङां च नवपूर्वार्द्धं लादेशावपरौ च द्वौ।
परस्मैपदमाख्यातं तङानावात्मनेपदम् ॥ १ ॥
परस्मै चात्मने भागे वचनानि त्रिधा द्विधा ।
त्रयस्ते पुरुषा ज्ञेयाः प्रथमोत्तममध्यमाः ॥ २ ॥
एकद्विबहुसंज्ञानि पदान्येकैकशस्तिङाम् ।
परस्मै कर्तरि ज्ञेयं न भावे नापि कर्मणि ॥ ३ ॥
आत्मने तु त्रिषु ज्ञेयं भावे कर्तरि कर्मणि ।
धातोरकर्मकाद्भावे प्रथमैकवचस्तथा ॥ ४ ॥
सकर्माऽकर्मकाद्धातोः कर्तरि स्मृतमात्मने ।
यत्तु कर्मणि निर्दिष्टं क्रियते तत्सकर्मकात् ॥ ५ ॥
नाम्नैव सन्नियोक्तव्ये प्रथमः पुरुषो भवेत् ।
त्वं युवां यूयमित्येभिस्त्रिभिरेव तु मध्यमः ॥ ६ ॥
अहमावां वयं त्वेभिरुत्तमो नान्यथा मतः ।
अन्यथा च प्रहासे स्यात् त्वं मन्येहं च भोक्ष्यसे ॥ ७ ॥

तिङः कतमः तिप् तस् झि । सिप् थस् थ । मिप् वस् मस् । त आताम् झ । थास् आथाम् ध्वम् । इट् वहि महिङ् । इत्यष्टादशधा तिङ् वेदितव्यः । तत्र तिङ्समूहे दशधा संज्ञा । प्रत्ययसंज्ञा, विभक्तिसंज्ञा, परस्मैपदसंज्ञा, आत्मनेपदसंज्ञा, प्रथमपुरुषः, मध्यमपुरुषः, उत्तमपुरुषः, एकवचनसं०, द्विवचनसं०, बहुवचनसं० ॥ केषां प्रत्ययसंज्ञा । सर्वेषाम् । विभक्तिसंज्ञा च ॥ ( **परस्मैपदमिति** ) तिङां नव पूर्वाणि वचनानि यौ द्वावपरौ 'शतृ, कसुच्' इत्येकादशधा परस्मैपदानि ॥ तङ्च आनश्च तिङित्यनेन तिङाम् उत्तराणि नववचनानि गृह्यन्ते। आन इति शानच्कानचोरुत्सृष्टानुबन्धयोर्ग्रहणम् । एवम् आत्मनेपदमेकादशधा॥

**परस्मै इति** । उभयपक्षेऽपि प्रथममध्यमोत्तमाः पुरुषा वेदितव्याः ॥ एवमात्मनेपदेऽपि ।

परस्मैपदं कर्तर्येव प्रयोक्तव्यं न भावकर्मणोः ॥ ननु यदि परस्मैपदं कर्तर्येव प्रयोज्यम्, तर्हि कथं ( लोके ) पच्यति क्रियति पुरुषकारा अनुवर्तयति । ( नाभ्यामिति ) पच्यति क्रियति एतद्वे दिरूपे परस्मैपदसंज्ञके न भवतः । अपि तु तिङ् व्यत्ययात्सत्यपि परस्मैपदश्रवणे आत्मनेपदं ज्ञातव्यम् ॥ **आत्मन इति** । आत्मनेपदं भावे कर्तरि कर्मणि च भवति । इत्युक्ते ( किं तर्हि ) सर्वेभ्यो धातुभ्यो नापि सर्वे प्रथममध्यमोत्तमा भवंति । नापि सर्वाणि वचनानि। किं तर्हि भावेऽकर्मकादेव धातोरात्मनेपदं भवति । प्रथमपुरुषैकवचनमेव भवति । यथा—स्थीयते देवदत्तेन । न कदाचित्स्थीयेते ॥ **सेति** । प्रहासे प्रयोगः कर्तव्यः । मन्ये त्वं मोक्ष्यसे अहमिति । मध्यमपुरुषस्थाने उत्तमपुरुषप्रयोगः कर्तव्यः । नान्यत्र ॥

उक्तं तिङ्स्वरूपमात्रम् । तिङः प्रयोगस्तु कश्चिद्विस्तरेण वक्ष्यति ( ते ) । अस्ति कस्यचित्प्रयोगस्य कर्मणि प्रथमा । यथा । वृक्षः छिद्यते तक्षकेण । कचिद्द्वितीया स्यात् । यथा । वृक्षं छिनत्ति तक्षकः । कचित्षष्ठी—वृक्षस्य रुजति व्यागः । 'रुजार्थानां भाववचनानामज्वरे' इति षष्ठी । शत्रूणां पिनष्टि राजा । 'जासिनि—' इति षष्ठी । कदाचित् चतुर्थी—ग्रामाय व्रजति पुरुषः। गत्यर्थे चतुर्थी द्वितीया च ॥

द्विकर्मणिजन्तप्रयोगो विज्ञेयः । यस्मात्तिङ्प्रयोगविषमो द्विकर्मणिजन्तः तत्प्रदर्शयिष्यामः । णिजन्तेभ्यो धातुभ्यः कर्मविवक्षायां द्वे कर्मणी अभिधीयेते। प्रधानमप्रधानं चेति। तत्र तिङन्तेन पदेन प्रधानकर्माभिधीयते । यतो भाष्यकारो ध्रुवमाह । द्विकर्मकेषु धातुषु कर्मविवक्षायां तिङा प्रधानकर्माभिधीयते। अपेक्षितत्वाच्च कर्मणः प्रथमैव भवति । अप्रधाने अनभिहितत्वात् द्वितीयैव भवति । अनभिहिते कर्तरि तृतीया भवति । उदाहरणम् । नीयते देवदत्तेन अजा ग्रामम् । आकृष्यते गौर्गोपालेन व्रजम् ॥

दुह्यादीनां प्रयोगे कर्मविवक्षायां अप्रधानकर्म अभिधीयते तिङ्पदेन ॥ तदाह—दुह्यते गौर्देवदत्तेन पयः । याच्यते राजा ब्राह्मणेन धनम् । रुध्यते गौर्देवदत्तेन व्रजम् । पृच्छते भिक्षुको वानप्रस्थेन ग्रामम् । भिक्ष्यते पालको माणवकेन क्षीराणि । चीयते तरुर्देवदत्तेन फलानि । उच्यते यजमानो धर्ममृषिणा । शिष्यते शास्त्रं गुरुणा शिष्यः ॥ ण्यन्तेभ्यो धातुभ्यो यः कर्ता कर्मभूतः स एवाभिधीयते । गच्छति भृत्यो ग्रामम् । गमयति भृत्यं ग्रामं गुरुः । गम्यते भृत्यो ग्रामं गुरुणा ॥ बुध्यते शास्त्रं शिष्यः । बोधयति शास्त्रं शिष्यं गुरुः । बुध्यते शास्त्रं शिष्यो गुरुणा ॥ ओदनं भुङ्क्ते ब्राह्मणः । भोजयति ब्राह्मणमोदनं यजमानः । भोज्यते ब्राह्मण ओदनं देवदत्तेन ॥ पठति माणवकः शास्त्रम् । पाठयति माणवकं शास्त्रमुपाध्यायः । पाठ्यते माणवकः शास्त्रमुपाध्यायेन । आस्ते आसने अतिथिः । आसयति अतिथिम् आसने नागरः । आस्यतेऽतिथिरासने नागरेण ॥ 'कर्तुः कर्मसंज्ञायां नीवह्योः प्रतिषेधो वाच्यः' 'गतिबुद्धि—' इत्यादिना (प्राप्ता) यथा । देवदत्तो नयति गाम् । नाययति देवदत्तेन गां यज्ञदत्तः । कर्तर्यनभिहिते कर्मणि पुनरभिहिते । नीयते गौर्ग्रामं देवदत्तेन । वहति भारं देवदत्तः ग्रामम् । वाह्यते देवदत्तेन भारो ग्रामम् ॥ सर्वत्र प्रत्यवसादनार्थे 'अदेरजग्धान्तस्य प्रतिषेधो वाच्यः' यत्किञ्चित्कार्यं प्रत्यवसादनाऽर्थे निर्दिष्टम्। अदेर्धातोरजग्धान्तस्य सर्वस्मिन् विधौ (कर्मसंज्ञा मा भूत्) । णिजन्तस्यादेः 'निगरणचलनार्थेभ्यश्च' इत्यन्तेन सूत्रेण

१ प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणि ॥

परस्मैपदं प्राप्तं तन्मा भूत् । ' गतिबुद्धीत्यादिना ' यः कर्ता पूर्वस्तस्य कर्मसंज्ञा मा भूत् । यथा आदयति पायसं देवदत्तेन यज्ञदत्तः । आदयते पायसं देवदत्तं यज्ञदत्तः । तस्य कर्मसंज्ञाप्रतिषेधः इति । यदि वक्तव्यो नास्ति । एवं प्रतिषेधो भविष्यति । आदयति पायसं देवदत्त यज्ञदत्तः । अजग्धान्तस्येति किम्—इदमेषां जग्धम् । ' क्तोधिकरणेचाध्रौव्यगतिप्रत्यवसानार्थेभ्यः ' इति क्तः । 'अदो जग्धिर्ल्यप्तिकिति ' इति जग्धिरादेशः अत्र षष्ठीप्रतिषेधो मा भूत् क्तवतिपर्युदासो न स्यात् । ' अधिकरणवाचिनश्च ' इत्यनेन क्तप्रत्ययस्य योगे षष्ठी स्यात् । किं च तृतीयैव स्यात् ॥ भक्षेरहिंसायाम् । भक्षेर्धातोरहिंसायामर्थे कर्तुः कर्मसंज्ञाप्रतिषेधः । भक्षयति पिण्डं देवदत्तः । अयं णिच् वा चुरादिगणः । पुनः ' हेतुमति च ' इत्यनेन णिच् विधीयते । हेतुमति लक्षणे विधीयमाने णिप्रयोगः । भक्षयति पिण्डं देवदत्तेन यज्ञदत्तः । अहिंसायां किम् । भक्षयति बलीवर्दान् देवदत्तः । कर्मसंज्ञाप्रतिषेधः वहेरनियन्तृकर्तृकस्य ॥ वहेर्धातोरनियन्तृकर्तृकस्याण्यन्तस्य यः कर्ता तस्य ण्यन्तस्य कर्मसंज्ञाप्रतिषेधो वाच्यः । वहन्ति बलीवर्दा भारम् । वाहयति बलीवर्दान् भारं यज्ञदत्तः ॥ अनियन्तृकर्तृकस्येति किम् । वहति बलीवर्दो भारम् । वाहयन्ति बलीवर्दान् भारं पथिकाः । बलीवर्दान् भार—पथिकान् । बलीवर्देषु भारं नीयमाना इत्यर्थः । उक्तोऽयं तिङ्प्रयोगः संक्षेपात् ॥

तिङ्प्रयोगमभिधाय कृत्प्रयोगमवसरप्राप्तं वक्ष्यामः ।

**कृतस्त्रिष्वपि वर्त्तन्ते भावे कर्तरि कर्मणि ॥**
**अजब्ल्युट्क्तिन्घञो भावे युजकारोऽङ्शईरिताः ॥ १ ॥**

कृत इति । कृत्प्रत्यया भावकर्मकर्तृषु त्रिषु भवंति । ते यथा। अच्, अप्, ल्युट्, क्तिन्, घञ्, युच्, अकारः, अङ्, शः, एते प्रत्यया भावे भवंति ।

अच् यथा । चयः नयः इत्यादि पुंस्येव । ' एरच् ' इति अच् ।

अप् यथा । करः वरः । प्रभवः ' ऋदोरप् ' इति अप् ॥

ल्युट् यथा । पचनम्, आचमनम्, वहनम्, धरणम्, यानम्, श्रवणम्, करणम्, विकरणम् । इति नपुंसके ' भावे ल्युट् च ' इति ल्युट् ॥

क्तिन् यथा—कृतिः मतिः बुद्धिः सिद्धिः पुष्टिः वस्तिः प्राप्तिरित्यादि 'स्त्रियां क्तिन्' इति क्तिन् ॥

घञ् यथा —पाकः रागः वादः भावः पादः योगः स्पर्शः अंशः स्पन्दः इत्यादि पुंस्येव । 'भावे घञ्' इति घञ् ॥

युच् यथा—चेतना, छेदना, भेदना, लावना, भावनेत्यादि । स्त्रियाम् । 'ण्यासश्रन्थो युच्' इति युच् ॥

अकारप्रत्ययो यथा—चिकीर्षा । जिगमिषा । चिकित्सा । बुभुत्सा । विवक्षा इत्यादि । स्त्रियाम् 'अप्रत्ययात्' इति अः ॥

अङ् यथा—जरा भिदा छिदा भिक्षा इत्यादि । स्त्रियाम् 'षिद्भिदादिभ्योऽङ्' इत्यङ् । उपदा अभिख्या इत्यादि स्त्रियाम् । 'आतश्चोपसर्गे' इत्यङ्

शः यथा—क्रिया 'कृञः श च' इति शः । इति भाववाचिनः ॥

## अथ मिश्रवाचकः ।

त्रिषु गत्यर्थकादिभ्यस्तथा चैवादिकर्मणि ।
अकर्मकात्समुत्पन्नो वर्तते कर्तृभावयोः ॥ २ ॥
इष्णुचूक्तवतु विच्क्तिन् क्विप्क्मरच्घाकन्ल्युणिन्घचः ।
उकाराणावुकञ्टकुटकादयः कर्तरि स्मृताः ॥ ३ ॥
भावे चोत्तरकाले ल्यप् तुमुन् क्त्वा पूर्वकालजाः ।
कर्मणि प्रथमा तेषां द्वितीया तु विशेषतः ॥ ४ ॥
वर्तमाने तु निर्देशे वर्तेते शतृशानचौ ।
तव्यसत्संज्ञकाभ्यां च समासो न तु सिध्यति ॥ ५ ॥
ग्रन्थदानाशयेनाहं श्लोकानां पञ्चविंशतेः ।
परार्थभावमुद्बोढुं प्रभवेयं भवे भवे ॥ ६ ॥

सकर्मकाद्धातोः कर्मणि यथा देवदत्तेन तीर्णः समुद्रः । भावे यथा—देवदत्तेन भूतम् । 'आदिकर्मणि क्तः कर्तरि च' गत्यर्थकादिभ्यः क्तप्रत्ययो भावकर्मकर्तृषु भवति । कर्तरि यथा—देवदत्तो ग्रामं गतः । भावे यथा—देवदत्तेन गतम् । अनुशुष्कः सूर्येण ह्रदः । ह्रदमनुशुष्कः । शुष्कं ह्रदेन । आश्लिष्टा कन्या देवदत्तेन । कन्यामाश्लिष्टो । देवदत्तः आश्लिष्टं भवतेत्यादि। प्रभुक्तम् ओदनं देवद

तेन । शुद्धं नद्या शुद्धा नदी 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' इति क्तप्रत्ययः । कृत्यप्रत्ययाश्च सकर्मकात्कर्मणि अकर्मकात् भावे भवंति ॥

तव्यतव्यदनीयर्यत्क्यब्ण्यतः खल एव च ।
युजिति प्रत्यया अष्टौ कृत्यसंज्ञाः प्रकीर्तिताः ॥ १ ॥

तव्यः यथा—भोक्तव्य ओदनो देवदत्तेन देवदत्तस्य वा ॥

तव्यत् यथा—सेवितव्यः कर्तव्यः हर्त्तव्यः । इत्यादि ॥

अनीयर् यथा—करणीयम् । स्पृहणीयम् । 'तव्यत्तव्यानीयरः' इतितव्यतव्यदनीयरः ॥

यत् यथा—पेयं देयं ज्ञेयमित्यादि । ' अचो यत् ' इति यत् ॥

क्यप् यथा—स्तुत्यः । शिष्यः । कृत्यः । भृत्यः इत्यादि । 'एतिस्तुशास्वृदृजुषः क्यप् ' इति क्यप् ॥

ण्यत् यथा—कार्यं भेद्यं छेद्यं भाग्यं वाच्यमिति ।'ऋहलोर्ण्यत् ' इति ण्यत॥

खल् यथा—सुखेन कर्तुं शक्यः सुकरः । दुःखेन क्रियते दुष्करः । ईषत्करः दुर्लभः इत्यादि । 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खल् ॥

युच् यथा—अकृच्छ्रेण सुदानं कृच्छ्रेण दीयते । दुर्दानं सुदानं दुःपानमित्यादि । ' आतो युच् ' इति युच् ॥

## अथ कर्तृवाचिनः ।

इष्णुच् क्तवतु विच् तृन् क्विप् क्मरच् षाकन् ल्युः णिनि अच् उकार अण् उकञ् टक् ट क इत्याद्याः । कर्तरि भवन्ति ॥

इष्णुच् यथा—अलंकरिष्णुः । 'अलंकृञ् निराकृञ् प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्' ॥

क्तवतु यथा—गतवान् । कृतवान् । 'क्तक्तवतू निष्ठा' इति निष्ठासंज्ञायाम् 'निष्ठा ' इति भूते कर्तरि क्तक्तवतू ॥

विच् यथा—रोट् रेट् सुगण् 'अन्निन्क्वनिप्वनिप्विचः ' इति विच् ॥

तृन् । कर्ता हर्ता 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ' इत्यधिकृत्य ' तृन् ' इति तृन् ॥

क्विप् यथा—उपनिषत् आसूः प्रसूः 'सत्सूद्विषद्रुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ' इति क्विप् ।

क्मरच् यथा-घस्मरो देवदत्तः । 'सृघस्यदः क्मरच्' इति क्मरच् ।

षाकन् यथा-ओदनस्य भिक्षाकः । 'जल्पभिक्षकुट्टलुण्ठवृङः षाकन्' ॥

ल्युः यथा-नन्दनः ॥

णिनिः यथा-ग्राही । वाही ॥

अच् यथा-पचः 'नंदिग्रहिपचादिभ्यो ल्युणिन्यचः' ॥

उकारो यथा-चिकीर्षुः तितीर्षुः । 'सनाशंसभिक्ष उः' ॥

अण् यथा-कुम्भकारः । 'कर्मण्यण्' इति अण् ॥

उकञ् यथा-ग्रामं प्रामुकः । 'लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्' इति उकञ् ॥

टक् यथा-सीधुपः । 'गापोष्टक्' इति टक् ॥

टः यथा-कुरुचरः । 'चरेष्टः' इति टः ॥

कः यथा-गोदः । 'आतोऽनुपसर्गे कः' इति कः ॥

भावे चोत्तरकाले इति ॥ ल्यप् यथा-प्रणम्य । 'समासे नञ्-पूर्वे क्त्वो ल्यप्' ॥

तुमुन् यथा-भोक्तुं व्रजति । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' । इति तुमुन् ॥

क्त्वा यथा-भुक्त्वा व्रजति । 'समानकर्तृकयोः पूर्वकाले' इति क्त्वा ॥

वर्त्तमान इति । शतृ यथा-जपंस्तिष्ठति । शानच् यथा-आसीनो ध्यायति हरिम् । 'लटः शतृशानचावप्रथमासमानाधिकरणे' । 'तौ सत्' । 'लटः सद्वा' । 'ताच्छील्यवयोवचनशक्तिषु चानश्' ॥

समास इति । हरिः सेवितव्यः । ओदनं भुञ्जन् शास्त्रमधीयानः । स्नानं करिष्यमाणः । भोगं भुञ्जानः अत्र समासो न सिद्ध्यति ॥

'दिङ्मात्रमुदितं चेत्थं लौकिकं कृतबुद्धिना ।
कात्यायनेन तद्भूयात्प्रीत्यै राधाविहारिणः' ॥

इति श्रीवररुचिविरचितं सोदाहरणकारकचक्रं समाप्तम् ॥

---

खेमराज श्रीकृष्णदास-मुंबई.

॥ श्रीः ॥

# रूपमालायाम् ।



जयपुरीयसंस्कृतपाठशालाध्यापकदाधिमथ–कुदाल–पण्डितबदरी-
लालसूनुलवपुरीयप्राच्यविद्यालयप्रधानाध्यापकमहामहोपा-
ध्याय पं० **शिवदत्त**संगृहीतायाम् ।

## प्रकीर्णके ३ भागे

## क्रियाकलापधातुरूपभेदाख्यातचन्द्रिका-
## श्लोकयोजनोपायाः ।

४–५–६

शास्त्रिभिः संशोधिताः ।


त इमे

**क्षेमराज–श्रीकृष्णदास इत्यनेन**

**मुम्बय्यां**

( खेतवाड़ी ७ वीं गली खम्बाटालेन )

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्–मुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशिताः ।

संवत् १९६९, शके १८३४.

# अथानुक्रमणिकाप्रारंभः ।

| धात्वर्थाः | क्रियाकलापे पृष्ठ | श्लो. | धातुरूपभेदे श्लोकाङ्काः | आख्यातचं० पृष्ठ | श्लो० |
|---|---|---|---|---|---|
| अपक्षये | | | | २९ | १५-१६ |
| अपध्याने | | | | ३० | |
| अपयाने | | | | ४७ | १२३ |
| अपराधने | १५ | १८ | | ३३ | ६९ |
| अपशब्दे | | | | ३५ | ९५ |
| अपस्मारे | | | | ३९ | २७ |
| अपह्नवे | | | | ३६ | ११४ |
| अपानशब्दे | | | | ३७ | १२७ |
| अब्गतौ | | | | ४६ | ११९ |
| अभिभवे | ८-९ | ६१-६४ | | ४८ | १३५ |
| अभियोगे | | | | ४७ | १२७ |
| अभिषवे | | | | ५ | २०९ |
| अभिसरणे | १३ | ११६ | | | |
| अभ्यञ्जने | १६ | २७ | | | |
| अभ्युत्थाने | | | | ४१ | ५२ |
| अर्चिर्नाशे | १३ | १३५ | | २९ | २० |
| अर्जने | | | | ५१ | १८२ |
| अर्दने | | | २२ | ४९ | १५६ |
| अर्पणे | | | | ४० | ३७ |
| अल्पीभावे | | | | | |
| अवतंसे | | | ५ | ३८ | १३ |
| अवतरणे | १५ | १३ | | | |
| अवधाने | १७ | ४२ | | ३१ | ४३ |
| अश्वशब्दे | १६ | ३० | | ३७ | १२४ |
| असूयायां | | | | ३२ | ५७ |
| अस्तंगतौ | | | | ४७ | १२१ |
| आक्रोशे | | | १२ | ३५ | ९५ |
| आगमने | ५ | १४ | | ४५ | १०५ |
| आग्रहे | | | | ३३ | ७१ |

| धात्वार्थाः | क्रियाकलापे पृष्ठ | क्रियाकलापे श्लो. | धातुरूपभेदे श्लोकाङ्काः | आख्यातचं० पृष्ठ | आख्यातचं० श्लो० |
|---|---|---|---|---|---|
| उत्कटशब्दे | | | | ३७ | १२९ |
| उत्कण्ठास्वने | | | | ३७ | १२५ |
| उत्कर्षप्राप्तौ | | | | ५० | १६६ |
| उत्कलिकायाम् | | | | ३० | ३९ |
| उत्कीर्णौ | | | | ५२ | २१२ |
| उत्कोचादिवशींकृतौ | | | | ४४ | ८२ |
| उत्कोचे | | | | ५५ | ६ |
| उत्क्षेपणे | | | | ५३ | २०१ |
| उत्तरदाने | | | | ३६ | ११२ |
| उत्थाने | १७ | ३७ | | | |
| उत्पादने | ४ | ५ | | | |
| उत्सेके | | | | ५३ | २०१ |
| उत्सेधे | | | | ४५ | १०१ |
| उदये | १० | ८७–८८ | | ४६ | ११५-१६ |
| उद्देशकृतौ | | | | ४४ | ८७ |
| उद्देशे | | | | ३० | ३५ |
| उद्यमे | १२ | १०० | | ४७ | १३१ |
| उद्वर्तने | १४ | १२८ | | ३८ | ८ |
| उद्वासे | | | | ५५ | ८ |
| उद्वाहे | १३ | ११६ | | ४० | ३८ |
| उन्मादे | | | | ३३ | ७८ |
| उन्मूलने | | | | ५० | १६२ |
| उपभोगे | १३ | ११५ | | ४१ | ४३ |
| उपमायाम् | | | | ३० | ३७ |
| उपलेपने | | | | ५३ | २०४ |
| उपबर्हणे | | | | ४१ | ४६ |
| उपवासे | | | | ४३ | ७२ |
| उपवेशने | ८ | ५२ | | ४० | ३० |
| उपसंहारे | | | | ५६ | ११ |

'प्रत्यभिजानात्यनुसंधत्ते प्रतिसंदधात्यपि ।
४८ 'प्रतिसंधत्ते प्रत्यवमृशतीमाः **प्रत्यभिज्ञाने**' ॥ ४० ॥
४९ '**विस्मृतौ** विस्मरति च तथैव प्रस्मरत्यपि' ।
५० '**मोहे** विचेतीभवति विमुह्यति च मूर्छति' ॥ ४१ ॥
५१ ऋच्छत्यपि' '**प्रमादे** तु स्रंसते विमनायते ।
प्रमाद्यतीति विमनीभवतीति चतुष्टयम् ॥ ४२ ॥
समादधात्यवदधात्यपि प्रणिदधाति च ।
५२ 'आत्मने **चावधाने** स्युरवधारयतीत्यपि' ॥ ४३ ॥
५३ '**अङ्गीकारे** प्रतिशृणोत्यत्र संगिरतेऽपि च ।
'अकर्मकं संशृणुते परस्मै चेत्सकर्मकम् ' ॥ ४४ ॥
'ऊरर्यूर्युररीम्यश्च करोति कुरुते पदे ।
अष्टौ स्युः प्रतिजानीतेऽभ्युपैत्यभ्युपगच्छति' ॥ ४५ ॥
५४ '**अनुज्ञाने**ऽनुमनुतेऽनुजानात्यनुमन्यते ।
५५ अत्रैवाभ्यनुजानाति चतस्रो' 'ऽथ **विलोकने** ॥ ४६ ॥
निर्वर्णयति निध्यायत्यालोकयति पश्यति ।
निरूपयति संपश्यत्यात्मने स्यादकर्मकम् ॥ ४७ ॥
आलोकते लक्षयते निभालयत ईक्षते ।
निचायत्यात्मनेऽपि द्वौ निशामयति चेत्यपि ॥ ४८ ॥
लोचते लक्षयति च क्रियाः पञ्चदश स्मृताः' ।
'शृणोत्याकर्णयति च तद्वन्निशमयत्यपि ॥ ४९ ॥
५७ निशाम्यतीति **श्रवणे**' '**घ्रातौ** जिघ्रति शिङ्घति' ।
५८ 'स्पृशत्यामृशति **स्पर्शे** छुपत्यालभतेऽपि च' ॥ ५० ॥
५९ '**आस्वादने** रसयति लेढि चास्वादयत्यपि ।
लीढे चेति चतुष्कं स्याद्बुद्धिवर्गोयमीरितः' ॥ ५१ ॥

इति बुद्धिवर्गः ॥

'अभिलष्यत्यभिलषत्यात्मनेऽप्यनुरुध्यते ।
आकाङ्क्षति स्पृहयति नाथ ( ध ) ते वष्टि लिप्सते ॥ ५२ ॥

आशंसते कामयते वाञ्छतीच्छत्यभीप्सति ।
६० समीहते तथाशास्ते **वाञ्छायां** तिथिसंख्यका:' ॥ ५३ ॥
६१ '**लोभे** त्रयं लुभ्यतीति धनायति च गृध्यति' ।
'उद्युंक्ते च प्रयतते क्रमते च व्यवस्यति ॥ ५४ ॥
६२ उत्सहत्यात्मनेऽपि स्यात्**प्रयत्ने** पदपञ्चकम्' ।
६३ 'विप्रीयतेऽपरजति द्वेष्टि **द्वेषे**ऽपरज्यति ॥ ५५ ॥
विरुणद्धि विगृह्णाति पञ्चामी चात्मनेपदे' ।
वैरायते तु विद्वेष्टि विराध्नोति विरुध्यते ॥ ५६ ॥
६४ विराध्यति च **वैरे** स्यांत्तथा व्युत्तिष्ठतेऽपि च' ।
६६ ' असूयत्यभ्य**सूयायाम्**' '**ईर्ष्याया**मीर्ष्यतीर्क्ष्यति' ॥ ५७ ॥
६७ 'संघर्षति स्पर्धते च **स्पर्धायां** प्रतिगर्जति ' ।
'मोदते ह्लादते हृष्यत्यानन्दति च तुष्यति' ॥ ५८ ॥
६८ प्रीणाति प्रीयते **प्रीतौ** निर्वृणोत्यात्मने ऽपि च ।
प्रचेतीभवतीत्यत्र प्रमनीभवतीति च ॥ ५९ ॥
सुमनायत इत्येव सुमनीभवतीत्यपि ।
सुखायते च निर्वातीत्येताः प्रोक्ताश्चतुर्दश' ॥ ६० ॥
'लज्जते त्रपते मन्दाक्षयत्यपि ह्रणीयते ।
७० जिह्रेतीति ह्रियां पञ्च' 'बिभेत्युद्विजते भये ॥ ६१ ॥
७१ त्रसति त्रस्यति तथा' '**क्षमायां** तु तितिक्षते ।
सहतीत्यात्मनेपि स्याच्चयं मृष्यति मर्षति ॥ ६२ ॥
क्षाम्यति क्षमते चेति सप्त साहयतीत्यपि' ।
७२ '**अनादरे**ऽवजानाति तथा परिभवत्यपि ॥ ६३ ॥
एकादशावगणयत्यवधीरयतीति च ।
असत्तिरोभ्यां कुरुते 'परस्मैपदभागपि ॥ ६४ ॥
तथाऽवमनुते चावमानयत्यवमन्यते ।
विमानयति चात्रावहेलयत्यपि हेडते' ॥ ६५ ॥
७३ ' **वञ्चने** विप्रलभते तथा वञ्चयतेऽपि च ।

आत्मने च द्वयं विप्रकरोति निकरोति च ॥ ६६ ॥
अत्रोल्लापयते चाभिसंधत्ते छलयत्यपि ।
प्रतारयति चैवाभिसंदधाति विचत्यपि' ॥ ६७ ॥ व्यच व्याजीकरणे
×७४ 'प्रस्तोभयति **तद्भेदे** तथा प्रोत्साहयत्यपि ।
×७५ '**दम्भक्रियायां** दभ्नोति द्वितयं दम्भयत्यपि' ॥ ६८ ॥
×७६ 'जिघांसति द्रुह्यति च **द्रोहे** व्यापादयत्यपि' ।
७७ 'अपाद्राध्यति राध्नोति रध्यतीत्यपराधने' ॥ ६९ ॥
७८ '**अपकारे**ऽपकुरुते क्षिणोत्यपकरोति च' ।
७९ 'पञ्च **क्रोधे** संरभते रुष्यति क्रुध्यतीति च ॥ ७० ॥
भामते कुप्यतीति' 'स्यादागृह्णात्यात्मने ऽपि च ।
८० अभिपूर्वं निविशते निर्बध्नात्याग्रहे त्रयम्, ॥ ७१ ॥
८१ '**करुणायां** तु दयतेऽनुगृह्णात्यात्मनेऽपि च ।
कृपायते च करुणायते चाप्यनुकम्पते ॥ ७२ ॥ म्र श्वा दिवत्वमाइ ।
८२ अनुक्रोशत्यपि स्युः षट्' '**तद्भेदे** तु प्रसीदति, ।
८३ '**शोके** तु शोचतीत्येकं' 'विषीदत्यनुतप्यते ॥ ७३ ॥
८४ अनुशेतेऽनुतपति **पश्चात्तापे** क्रिया मताः ।
८५ 'निर्विद्यते तु **निर्वेदे** निर्विण्णीभवतीत्यपि, ॥ ७४ ॥
८६ 'क्रियाद्वयं विलपति **विलापे** परिदेवते' ।
स्र ८७ 'रोदित्यस्त्रयति क्रन्दत्यपि बाष्पायतेऽपि च' ॥ ७५ ॥
'अनुरज्यत्यनुरजत्यात्मनेपि पदद्वयम् । रञ्ज रागे स्वरितेत्
प्रीयते स्निह्यति तथा **स्नेहे** पदचतुष्टयम्' ॥ ७६ ॥
'**गर्वे**ऽभिमनुते गर्वयते दृप्यति माद्यति ।
अहंकरोत्यात्मनेऽपि क्षीवते चाभिमन्यते ॥ ७७ ॥
९० गर्वत्युद्धन्त्य' '**थोन्मादे** लोडत्युन्माद्यतीति च' ।
९१ 'ताम्यति क्लाम्यति **ग्लानौ** ग्लायति क्लायतीति च' ॥ ७८ ॥ (?)
९२ 'मलिनीभवति **म्लानौ** म्लायत्यपि पदद्वयम्' ।
४ 'खिद्यते ग्लेपते **दैन्ये**' 'श्राम्यतीति **परिश्रमे** ॥ ७९ ॥
ग्लेपृ दैन्ये ।

तथैवायस्यतीत्यत्र प्रयस्यति पदत्रयी' ।
'क्लिश्यते व्यथते दुःखायते कृच्छ्रायते ऽपि च ॥ ८० ॥
९६ दूयते चेति **दुःखित्वे** '**जुगुप्सायां** जुगुप्सते ।
९७ बीभत्सते ' ' ऽथ **जृम्भायां** जृम्भते जम्भतेऽपि च ' ॥ ८१ ॥
९८ 'प्रमीलतीति **तन्द्रायां** घूर्णते प्रचलायते ' ।
'शेते निद्राति निद्रायत्यपि निद्रायते ऽपि च ॥ ८२ ॥
९९ तथा संविशति **स्वापे** स्वपित्यपि च षट् क्रियाः ' ।
१०० 'प्रबुध्यते तु जागर्ति **जागर्यायां** पदद्वयम्' ॥ ८३ ॥
१०१ ' **प्रबोधने** चेतयते प्रबोधयति चेतति ' ।
१०२ ' हसत्यकर्मकं **हासे प्रहासे** तु सकर्मकम् ' ॥ ८४ ॥
१०४ ' स्मयते **हसिते मन्दे** ' '**गर्ह्ये** कुस्मयते **स्मिते**' ।
१०५ ' **मध्यमे** स्याद्विहसति ' ' **सुप्रौढे**ऽपहसत्यदः ' ॥ ८५ ॥
१०८ ' **सनिन्दे** तूपहसति ' '**परिहासे** तु भण्डते ' ।
१०९ तथा परिहसत्यत्र' '**विस्मये** तु पदद्वयम् ॥ ८६ ॥
विस्मेरीभवतीत्यत्र तथा विस्मयतेऽपि च' ।

इत्यन्तःकरणवर्गः ॥

११० ' आचष्टे वक्ति वदति लपत्याख्याति भाषते ॥ ८७ ॥
अभिधत्ते परस्मै च ब्रूते व्याहरतेऽत्र पम् ।
गृणात्युदीरयति च कीर्तयत्यालपत्यपि ॥ ८८ ॥
वदत्यपि भणत्यत्र कथयत्यपि वासति ( ऽ ) ।
**उक्ता**वावेदयति च क्रिया अष्टादशोदिताः ' ॥ ८९ ॥
१११ **प्रलापे** तु प्रलपति कुत्रचिज्जल्पतीति च ' ।
११२ 'आम्रेडयति तु **द्वित्रिरुक्तौ** संजागदीत्यपि ॥ ९० ॥
११३ ' **अनुवादे**ऽनुवदतेऽनुवक्तीत्यादयोपि च' ।
११५ ' पठत्यधीतेऽ**ध्ययने**' '**शिक्षणे** शिक्षते त्रयम् ' ॥ ९१ ॥
११६ अभ्यस्यत्यामनति च' '**पाठने** पाठयत्यपि ।
शिक्षयत्यनुशास्तीति चतस्रोऽध्यापयत्यपि' ॥ ९२ ॥

×११७ 'वेदमाचष्टे इत्यर्थे वेदापयति संमतम् ।
११९ 'सत्यापयति सत्योक्ता' 'वथ **मिथ्याभिशंसने**' ॥ ९३ ॥
आक्षारत्यभिशपत्यभ्याचष्टेऽधिशंसति ।
अपशब्दयति म्लेच्छत्यपभ्रंशयतीत्यपि ॥ ९४ ॥
१२० म्लेच्छयत्य**पशब्दे** स्युरपभाषत इत्यपि' ।
१२१ 'शपते त्रय**माक्रोशे** शपत्याक्रोशतीत्यपि' ॥ ९५ ॥
१२२ 'मिथ्याकारयते त्वेत**दन्यथात्वे**' '**सकृत्कृते** ।
१२३ स्खलति भ्रेषते **भ्रेषे** भ्रेषतीति पदत्रयम् ॥ ९६ ॥
१२४ जुगुप्सते तु **निन्दायां** गर्हते गर्हयत्यपि ।
आक्षिपत्यात्मने ऽपि द्वे उपक्रोशति निन्दति ॥ ९७ ॥
तथा भर्त्सयते कुत्सयते गृञ्जति च क्वचित्' ।
१२५ '**भयदे निन्दने** तर्जत्यत्र तर्जयतेऽपि च' ॥ ९८ ॥
१२६ 'पर्यपाभ्यां वदत्येव **कलंकार्पणनिन्दने**' ।
१२७ '**उपालम्भे** प्रतिभिनत्त्युपालभत इत्यपि' ॥ ९९ ॥
१२८ 'विक्रोशति तु **विक्रोशे** फूत्करोत्यात्मनेपि च' ।
१२९ '**स्तुतौ** पणायति द्वे च नौति स्तौत्यात्मनेपि च ॥ १०० ॥
अष्टौ स्तवीतीडयति वन्दते च प्रशंसति ।
क्वचित्तु श्लाघत इति **स्तुता**वेव पदं विदुः' ॥ १०१ ॥
१३० '**कत्थने** कत्थते तत्र श्लाघते शाडतेऽपि च' ।
×१३१ 'कवते वर्णयति च **कवित्वे** कवयत्यपि' ॥ १०२ ॥
×१३२ 'उपश्लोकयतीत्येषा क्रिया **श्लोकैरुपस्तुतौ**' ।
×१३३ 'स्यात्प्रत्यभिवद**त्याशीर्वादे** आशिषयत्यपि' ॥ १०३ ॥
' निबध्नाति ग्रश्नाति च ग्रथ्नाति ग्रन्थयत्यपि' ।
१३४ **गुम्फने** संदभति च गुम्फते चेति षट् क्रियाः' ॥ १०४ ॥
१३५ 'समाहरति **संक्षेपे** संगृह्णाति समस्यति ।
१३६ संक्षिपत्यात्मनेऽप्येता' '**स्तत्रछेदे**ऽथ वयत्यपि' ॥ १०५ ॥
१३७ तथा कूणयते' 'चाथ **विस्तारे** सप्त कीर्तिताः ।
विस्तृणोति व्यस्यति च विस्तृणात्यातनोति च ॥ १०६ ॥

चतस्र आत्मनेऽप्येताः प्रपञ्चयति पञ्चमी ।
x ऊर्युररूररीभ्यश्च करोति कुरुते क्रिये ॥ १०७ ॥
'व्याख्याति व्याकरोत्यत्र व्याचष्टेऽर्थोपयत्यपि ।
तथा व्याकुरुते व्यक्ति व्यनक्ति व्यञ्जयत्यपि ॥ १०८ ॥ व्याख्याति इति व्यक्तु गतौ याचने आदिः।
१३८ एवं प्रकाशयत्यत्र **विवृतौ** स्फुटयत्यपि ।
उद्घाटयत्युद्घटयत्यपि व्यक्तीकरोति च ॥ १०९ ॥
१३९ 'आकारयत्याह्वयति स्या**दाह्वाने** क्रियाद्वयम्' ।
१४१ 'स्यात्**संहूतौ** संह्वयते' **स्पर्धया**ह्वयते **हवे**' ॥ ११० ॥
१४२ 'अनुयुंक्ते प्रश्नयति **प्रश्ने** ज्ञीप्सति पृच्छति' ।
१४३ 'आपृच्छते तु **यात्रादौ** तथाऽनुज्ञापयत्यपि' ॥ १११ ॥
१४४ 'आभिमुख्येन **वचने**ऽभिब्रवीत्यभिवक्ति च' ।
प्रतिवक्त्युत्तरयति प्रत्याहेत्यादयोऽपि च' ॥ ११२ ॥
१४५ 'विज्ञापयति **विज्ञप्तौ** निवेदयति च द्वयम्' ।
'अपह्नुतेऽपजानीते निह्नुतेऽपनयत्यमी ॥ ११३ ॥
१४६ **अपह्नवे**' निराचष्टे प्रत्याचष्टे निरस्यति ।
सप्तापोहति च प्रत्यादिशत्यपि परास्यति ॥ ११४ ॥
अपाकरोत्यात्मनेपि व्युदस्यत्यप्यपास्यति ।
प्रत्यासयति क्षेपयति स्यात्परानुदतीति च ॥ ११५ ॥
१४७ निराकरोति च पराकरोति च निराकृतौ ।
x १४८ लुम्बत्यपनयत्येत**द्भेदे** व्यपनयत्यपि ॥ ११६ ॥
'उपमन्त्रयते चोपवदते सान्त्वयत्यपि ।
१४९ **सान्त्वने** षट् सामयति तथोपच्छन्दयत्यपि ॥ ११७ ॥
१५० परस्मै चानुनयतेऽनुलोमयति **तद्विदि** ।
१५१ अनुकूलयतीति द्वे' 'सूचयत्यत्र **सूचने** ॥ ११८ ॥
तथा पिशुनयत्येष वाक्क्रियावर्ग ईरितः ।

**इति वचनक्रियावर्गः ॥**

'रवीति रौति नदति ध्वनति ध्वनयत्यपि ॥ ११९ ॥

१५२ 'शब्दायते स्वनति च **ध्वना**वष्टौ रणत्यपि'।
१५४ 'रम्भते रेफते **शब्दे गवाम्**' '**उक्षण**स्तु नर्दति'॥ १२०॥
१५५ '**मेघस्य** तु स्तनयति तथा रसति गर्जति'।
१५७ 'स्फूर्जत्य**शनिनिर्घोषे**' '**भीमे** घुरति गर्जति'॥ १२१॥
१५८ 'प्रायो **मृगखगादीनां** नादे कूजति गुञ्जति'।
१६० '**वीणादेः** क्वणति प्रायः' 'कवते कौति **कर्कशे**'॥ १२२॥
१६१ '<u>भषते</u> बुक्कयति च बुक्कतीति **शुनो ध्वनौ**'।
१६३ 'क्नूनाति रेभते **वार्के**' '**तिरश्चां** वाश्यते **ध्वनौ**'॥ १२३॥
१६५ 'कुवते घुरती**त्यार्ते**' '**घोरे** ध्वाङ्क्षति **वाशिते**'॥
१६७ 'हेषते ह्रेषते**ऽश्वानाम्**' 'हस्तिनां बृंहतीति च'॥ १२४॥
१६९ 'बुक्कारयति **सिंहानाम्**' '<u>**उत्कण्ठास्वन** आनुते</u>'।
१७० 'निष्कूजति च संक्रीडत्येते **शकटघोषणे**'॥ १२५॥
१७१ 'हिक्कते हिक्कतीति द्वे **हिक्कायां**' 'क्षौति तु **क्षुते**'।
१७४ 'कासते **कफजे शब्दे**' '**सौरसे** मणतीत्यदः'॥ १२६॥
१७५ 'कौक्षे कर्दत्य' '**पानोत्थे** पर्दते शर्धते पदे'।
१७७ 'चीत्करोति क्रकरोति **रथकार्मुकयोः** क्रमात्'॥ १२७॥
१७९ 'द्वे आत्मनेऽपि' **भूषादेः** शिङ्क्ते' '**गीते** तु गायति'।
१८० 'उपवीणयतीत्येत**दुपगाने** हि **वीणया**'॥ १२८॥
१८१ 'उद्घोषत्युत्कटे **शब्दे** निर्घोषति च ह्रादते'।
१८२ 'उत्पूर्वाः शब्दवाचिन्यः क्रिया **उच्चस्वने** मताः'॥ १२९॥
१८३ 'प्रतिपूर्वः **प्रतिध्वाने**' शब्दवर्गोयमादृतः।

इति ध्वनिक्रियावर्गः॥

अत्र भावविकारणां धियामिच्छादिकर्मणाम्॥
वाचां तत्संगतानां च पर्यायाः प्राय ईरिताः॥

**इति प्रयुक्ताख्यातमञ्जर्यां प्रथमः काण्डः॥**

---

१ **वृकसंबन्धिनि।**

अथोच्यन्ते नृविप्रादिचेष्टावर्गाः समासतः ।
प्रसङ्गतोऽन्याः पर्यायैः क्रमात्पादपदात्मकैः ॥ १ ॥
१८४ 'आरम्भे तु प्रक्रमते प्रस्तौतीत्यात्मनेऽपि च' ।
तथैवारभते चोपक्रमतेऽत्र चतुष्टयम् ॥ २ ॥
१८५ 'प्रकृत्याऽनुसृतौ चानुबध्नात्युद्घाटयत्यपि' ।
१८६ 'कृतौ करोति कुरुते विधत्ते विदधाति च' ॥ ३ ॥
तनुते वितनोत्यत्र सृजत्युत्पादयत्यपि ।
निर्मिमीते भावयति निर्माति रचयत्यपि ॥ ४ ॥
निष्पादयति निर्वर्तयति साधयतीति च ॥
१८७ 'अनुतिष्ठत्याचरति' 'श्रद्धायुक्तेऽनुसृज्यते' ॥ ५ ॥ श्रद्धार्थे [illegible]
१८८ 'उत्तिष्ठते तु घटते चेष्टायां सप्त चेष्टते ॥
व्यायच्छते व्याप्रियते प्रवर्त्तत इहेहते ॥ ६ ॥
१८९ 'विडुत्सर्गे तु गुवति हदते' ऽथावमेहते ।
१८९ मूत्रणे मूत्रयति च प्रस्रवत्यपि च त्रयम्' ॥ ७ ॥
१९० 'उन्मार्ष्ट्युद्वर्तने चोत्सादयत्युद्वर्तयत्यपि' ।
१९१ 'द्रवैस्तैलादिभिर्लेपे म्रक्षयत्यभ्यनक्ति च' ॥ ८ ॥
१९२ 'परिधाने परिदधात्यत्र संवस्त्रयत्यपि ॥
आच्छादयति वस्ते च परिधत्ते च पञ्चकम्' ॥ ९ ॥
१९४ 'कटिबन्धे घटयति तथा परिकरोत्यपि' । [illegible]
१९५ 'प्रावृतौ प्रच्छदयति तथात्र प्रावृणोत्यपि' ॥ १० ॥
१९६ 'अनुलिम्पति चर्चायामुपदेग्ध्यात्मनेऽप्युभे' ।
१९७ 'चर्चयत्यथ' भूषादिग्रहणे प्रतिमुञ्चति ॥ ११ ॥
आमुञ्चत्यात्मनेप्येताः पिनह्यत्यपि नह्यति ।
१९८ 'परिष्करोति' 'भूषायामात्मनेऽलंकरोत्यपि' ॥ १२ ॥
मण्डते मण्डयति च भूषयत्यपि भूषति ।
१९९ 'प्रसाधयत्य' 'थोत्तंसत्यवतंसेऽवतंसति' ॥ १३ ॥
२०० 'अनक्ति कज्जलयति' वीजने वीजयत्यथ ।

२०२ 'सुरभीकुरुते धूपयति वासयतीत्यपि' ॥ १४ ॥
'चकास्ति भासते भाति रोचते च प्रकाशते ।
शोभते भ्राजते राजत्यात्मनेऽप्यत्र दीव्यति ॥ १५ ॥
२०३ दीप्यते द्योतते **दीप्तौ** ज्वलत्युल्लसतीत्यपि' ।
२०४ '**नटने** नाट्यस्त्र त्रयं नटति नृत्यति' ॥ १६ ॥
२०५ 'हिलतीति तु **हावे**')'ऽथ कुमारयति खेलति ।
विहरत्यात्मनेऽप्यत्र तथा क्रीडति दीव्यति ॥ १७ ॥
खेलायतीह ललति रमते विलसत्यपि ।
२०६ आङोऽनुसंपरिभ्यश्च क्रीडते **क्रीडनार्थकाः**' ॥ १८ ॥
२०८ 'कूर्दते **प्लुतिखेलायाम्**' अथा**नुकरणे** त्रयम् ।
विडंबयत्यनुकरोत्यात्मनेऽनुहरत्यपि' ॥ १९ ॥
२०९ 'भवेत्प्रतिनिधत्ते तु **सादृश्ये**ऽत्रानुकल्पते' ।
२१० 'रिङ्गति स्खलतीत्येषा **स्खलने** स्यात्क्रियाद्वयी' ॥ २० ॥
२११ '**तर्षे** तृष्यत्यमी धित्सत्युदन्यति पिपासति' ।
२१२ 'पिबत्याचामति धयत्यत्र **पाने** च पीयते' ॥ २१ ॥
२१३ '**कठिनद्रव्यसंबद्धरसपाने** तु चूषति' ।
२१४ 'बुभुक्षते क्षुध्यति च जिघत्सत्यशनायति' ॥ २२ ॥
'जेमत्यश्नाति चरति भक्षयत्यत्ति खादति ।
भुंक्ते तृणोति तर्णोति तथाऽभ्यवहरत्यपि ॥ २३ ॥
आत्मने च त्रयं प्साति जक्षिति प्रत्यवस्यति ।
२१६ 'उपयुंक्ते च **भुक्तौ** स्युः' '**दन्तच्छेदेन** चर्वति' ॥ २४ ॥
२१७ '**सध्वनौ** विष्वणत्यत्र तथा चावष्वणत्यपि । '
२१८ '**निगीर्णौ** तु गिलत्यत्र ग्रसते निगिरत्यपि' ॥ २५ ॥
२१९ 'दन्दश्यते दन्दशीति दन्दशत्यत्र **गर्हिते** ।
२२० '**दंशे**' '**विशुद्धे** दशति तथा दंशयते द्वयम्' ॥ २६ ॥
२२१ 'अपस्मरत्य**पस्मारे** '**विरेके** तु विरिच्यते' ।
कर्मकर्तर्यसौ तत्र भवेदतिसरत्यपि' ॥ २७ ॥

२२३ **वान्तौ** वमत्युद्गिरति छर्दयत्युद्गिलत्यपि' ।
२२४ 'निष्ठीव्यतीति **थूत्कारे** द्वयं निष्ठीवतीत्यपि' ॥ २८ ॥
२२५ '**शेषे** परिशिनष्टीति द्वितयं शेषयत्यपि' ।
२२६ '**तृप्तौ** तृप्यति तृप्नोति सुहिति भवतीत्यपि' ॥ २९ ॥
२२७ 'विश्राम्यतीति **विश्रान्तौ** क्वचिद्विश्रमते मतम्' ।
२२८ 'आस्ते निविशते चोपविशत्यत्र निषीदति' ॥ ३० ॥
२२९ 'ऊर्ध्वीभवति चोत्तिष्ठत्त्यूर्ध्वत्वे तिष्ठतीत्यपि' ।
२३० 'अनुक्रामति पर्येति परीयत इति **क्रमे**' ॥ ३१ ॥
२३१ '**आदाने** स्वीकरोत्यत्र गृह्णात्यप्यात्मने द्वयम् ।
उपादत्ते गृह्यते लाति षट् स्युः प्रतीच्छति' ॥ ३२ ॥
२३२ '**त्यागे** त्यजत्युत्सृजति जहात्युज्झति मुञ्चति ।
उत्सृज्यते विसृजति मुञ्चते रहयत्यपि ॥ ३३ ॥
आत्मने स्यात्परिहरत्यत्र मोक्षयतीत्यपि ।
२३३ '**वर्जने** वारयत्यत्र स्यान्निवारयतीति च ॥ ३४ ॥
तथा वृणक्ति वृंक्ते च व्यासेधति निषेधति ।
२३४ वर्जयत्यपि सप्तैताः' '**वरणे** वरयत्यदः' ॥ ३५ ॥
वावृत्यते वृणोतीति वृणातीत्यात्मनेऽप्युभे ।
२३५ 'आधत्ते च निधत्ते च निदधात्यादधाति च ॥ ३६ ॥
२३६ 'आरोपयत्यर्पयति निश्य ( न्यस्य ) तीति तथा**र्पणे**' ।
२३७ 'विन्यस्यतीति **तद्भेदे** संनिवेशयतीत्यपि' ॥ ३७ ॥
'करोति हस्ते-पाणिभ्यां कुरुते चोपयच्छते ।
२३८ विवहत्युद्वहति **चोद्वाहे** परिणयत्यपि ॥ ३८ ॥
२३९ चत्वारि वात्मने' '**ज्येष्ठेऽनूढे** च परिविन्दति' ।
२४० 'आचोटयत्याचुटति द्वयमेत**न्नखक्षते**' ॥ ३९ ॥

---

**१ 'वा' इति 'छन्दोनुरोधाय' इति केचिन्मन्यंते । तन्मते 'वृत्यते' इति ॥ भट्टिकाव्ये तु 'ततो वावृत्यमाना सा रामशालां न्यविक्षत' इति धात्ववयव एवोपलभ्यते ॥**

'परिष्वजत आश्लिष्यत्यालिङ्गत्युपगूहति ।
क्रोडीकरोत्यात्मने द्वावङ्कपालयतीति च ॥ ४० ॥
२४२ सप्त स्युः **परिरम्भे** परिरभते' 'ऽप्यथ **रिरंसायाम्** ।
कामयतेऽत्र वृषस्यति रिरंसते चेत्परं योषित् ॥ ४१ ॥
२४४ 'अश्वस्यति तु **यद्यश्वा**' '**चुम्बने** चुम्बतीत्यदः' ।
२४५ 'व्यवैति संविशत्यत्र निधुवत्यपि **मैथुने** ॥ ४२ ॥
२४६ मिथुनीभवतीत्यत्र' '**संप्रयुङ्क्ते** यभत्यपि' ।
२४७ उपभुङ्क्ते **तूपभोगे** संभुङ्क्ते निर्विशत्यपि' ॥ ४३ ॥
२४८ 'प्रसूयते प्रसूते च **गर्भमोक्षे** विजायते ।
प्रजायते जनयति प्रसौतीति षडीरिताः ॥ ४४ ॥
२४९ '**गर्भमोक्षादिसंक्लेशे** द्वयं कुश्नाति कुन्थति' ।
२५० 'शूलत्यामयतीत्यत्र रुजत्यत्र **रुजि** त्रयम् ॥ ४५ ॥
२५१ 'उल्लाघयति **भैषज्ये** भिषज्यति चिकित्सति' ।
२५२ 'उपबर्हत्युपदधात्यात्मनेऽप्युपबर्हणे' ॥ ४६ ॥

इति मनुष्यचेष्टावर्गः ॥

२५३ '**शौचे** नेनेक्ति नेनिक्ते प्रक्षालयति धावति ॥ ४७ ॥
२५४ धावते शोधयति च' '**तद्भेदे** मार्ष्टि मार्जति ।
अत्रोपसंस्करोतीति चतस्रो मार्जयत्यपि' ॥ ४८ ॥
२५५ '**पावित्र्ये** तु पुनातीति पुनीते पवतेऽपि च' ।
२५६ 'शुध्यतीति **शुचीभावे** विशुध्यत्यवदायति' ॥ ४९ ॥
२५७ 'स्नाने तु स्नायति स्नाति' '**तद्विशेषे** तु मज्जति ।
ब्रुडत्याप्लवते चात्र स्युश्चतस्रोऽवगाहते' ॥ ५० ॥
२५९ 'उपस्पृशति चाचामत्युभे **आचमना**त्मके' ।
२६० '**आभिमुख्यागमे**ऽभ्येति तथाभ्यायाति च द्वयम् ॥ ५१ ॥
२६१ '**अभ्युत्थानक्रियायां** तु स्यादभ्युत्तिष्ठतीत्यदः ।
२६२ 'प्राघुणत्य**तिथीभावे** तथाऽभ्यागच्छतीत्यपि' ॥ ५२ ॥
२६३ 'अभिवादयति **प्रणता**वुपसंगृह्णाति चात्मने द्वितयम् ।
नमति नमस्यति षट् स्युः प्रणिपतति वन्दते चात्र' ॥ ५३ ॥

'अथार्घत्यञ्चति यजत्यपचायति चात्मने ।
चतस्रः पूजयत्यत्र **महयत्यर्हयत्यपि** ॥ ९४ ॥
सभाजयत्यर्चयते महत्याराधयत्यपि ।
सपर्ययति चाराध्नोत्याराध्यति तथार्हति ॥ ९५ ॥
२६५ मानयत्यपि **पूजायाम्**' '**आदरे** सत्करोति च ।
संमन्यते चाद्रियते तथा संभावयत्यपि' ॥ ९६ ॥
२६६ '**नीराजने** तु निर्मञ्छत्यत्र नीराजयत्यपि' ।
'शुश्रूषते परिचरत्युपास्ते वरिवस्यति ॥ ९७ ॥
२६८ चतस्रः **परिचर्यायां**' 'लालयत्यु**पसेवने**' ।
तथोपसेवते' 'चाथ यजते चोपतिष्ठते ॥ ९८ ॥
२६९ यजत्यपि **सुरार्चाया**' 'मथ विश्रमयत्यपि ।
२७० संवाहयति चात्र द्वे **पादाद्यङ्गोपमर्दने**' ॥ ९९ ॥
२७१ '**दाने** ददाति दत्ते च ददते वितरत्यपि ।
प्रयच्छत्यर्पयति च दिशते दिशति क्वचित् ॥ ६० ॥
अपवर्जयति स्पर्शयति विश्राणयत्यपि ।
तथा विलभते राति प्रतिपादयतीत्यपि' ॥ ६१ ॥
२७२ 'स्वधाकरोत्यात्मने द्वे पितृभ्यो निर्वपत्यपि' ।
२७३ 'जुहोति **हविषामग्नौ प्रक्षेपे** त्रितयं मतम् ॥ ६२ ॥
स्वाहावौषड्वषड्भ्यश्च करोति कुरुतेऽपि च' ॥
२७४ '**प्रक्षेपे** तु प्रतिवश (स) त्यत्र प्रक्षिप्यतीति च ॥ ६३ ॥
मिनोतीत्यात्मनेऽपि स्युश्चतस्रः प्रक्षिपत्यपि' ।
विक्षिपत्यात्मनेऽपि स्याद्विक्षेपे विक्षरत्यदः' ॥ ६४ ॥
२७५ '**आमन्त्रणे** केतयति निमन्त्रयत इत्यपि ।
२७६ 'अत्रामन्त्रयते' चाथ '**तर्पणे** धिनुतेऽन्वति' ॥ ६५ ॥
धिनोति प्रीणयति च **पञ्च** तर्पयतीत्यपि' ॥
२७७ '**अनुज्ञायास्तु करणे**ऽनुजानात्यनुमन्यते' ॥ ६६ ॥
२७८ 'धापयत्यात्मनेऽपि द्वौ **धापने** पाययत्यमूः ।

x२७९ 'चूषयत्यादयोऽप्यत्र ' स्युरथो '**परिवेषणे** ॥ ६७ ॥
द्वयं यामयतीत्यत्र परिवेवेष्टि चात्मने ।
x२८० 'आदयत्यात्मनेऽप्यत्र भोजयत्यादि **भोजने** ॥ ६८ ॥
२८१ पिपर्ति पूरयति च पारयत्यपि **पूरणे** ।
२८२ अत्राप्याययति प्राति प्रीणातीत्य ' थ '**तोषणे** ॥ ६९ ॥
सुखाकरोति सुखयत्याह्लादयति चेत्यपि ।
धिनोत्यानन्दयति च मृडयत्यादयस्तथा ' ॥ ७० ॥
x२८४ '**इज्यारम्भे** दीक्षते च ' ' जपतीति त्रिधा **जपे**' ।
x२८५ 'जञ्जप्यते **जपे निन्द्ये**' 'संजपत्यत्र**शोभने**' ॥ ७१ ॥
x२८६ ' उपाकरोत्यात्मनेपि **संस्कराद्ये** श्रुतेर्ग्रहे' ।
२८७ '**अभुक्तौ** तूपवसति-लङ्घते व्रतयत्यपि ' ॥ ७२ ॥
२८८ 'तप्यते तु **तपस्यायां** तपस्यत्यप्युभे क्रिये ॥
२८९ 'करोति कुरुते **मौण्ड्ये** भद्राभद्रापुरःसरे ॥ ७३ ॥
मुण्डयत्यत्र वपति तथा मुण्डयतेऽपि च' ॥
२९० उपेक्षते तथोदास्ते पदे **माध्यस्थ्य**वाचिनी ' ॥ ७४ ॥
' स्युर्विरज्यत्युपरमत्यात्मने विरजत्यमूः ॥
२९१ उपशाम्यति **वैराग्ये** तथा निर्विद्यतेऽपि च ' ॥ ७५ ॥
२९२ 'मुमुक्षते **मुमुक्षायाम्** ' अमृतीयति मोक्षते ।
प्रत्यञ्चति समाधत्ते निर्विकल्पीभवत्यपि ' ॥ ७६ ॥
२९३ ' परिव्रजति **संन्यासे** संन्यस्यत्यात्मनेऽप्यदः ।
२९४ ब्रह्मीभवति **कैवल्ये** निर्वातीति चतुष्टयम् ॥ ७७ ॥
कर्मकर्तरि तत्र द्वे मुच्यते चापवृज्यते ' ॥

इति ब्रह्मक्रियावर्गः ॥

२९५ '**ऐश्वर्ये** इन्दतीष्टे च तप्यतेऽधीष्ट इत्यपि ' ॥ ७८ ॥
२९६ '**प्रतिष्ठाप्तौ** तु विख्याति प्रख्याति प्रतितिष्ठति ' ॥
२९७ '**रक्षणे** त्रायते पाति गोपायति भुनक्ति च ॥ ७९ ॥
पिपर्ति रक्षति तथा पालयत्यवतीति च ॥

२९९ शास्ति ' "**शिष्टौ** शिक्षयति ' **दण्डे** दण्डयतीत्यदः ॥ ८० ॥
३०० दाम्यत्य ' 'थ **वशीकारे** धारयत्यात्मनेऽपि च ।
तथा वशीकरोतीति संगृह्णाति च पूर्ववत् , ॥ ८१ ॥
३०१ 'प्रपद्यते तु **शरणागतौ** शरणयत्यपि ' ।
x ३०२ 'परिक्रीणीत इत्येतदुत्**कोचादिवशीकृतौ** ॥ ८२ ॥
x ३०३ '**आपत्तौ** स्यादापतते वशीभवति च द्वयम् ' ।
३०४ '**स्थिरीकृतौ** स्थापयति तथा द्रढयतीत्यपि ' ॥ ८३ ॥
३०५ '**धारणार्थे** धारयति दधाति च बिभर्ति च ।
द्वे आत्मने च दधते धरतीति च पञ्चकम् ' ॥ ८४ ॥
' नियुङ्क्ते आज्ञापयति निदिशत्यादिशत्यपि ।
३०६ द्वावात्मनेऽपि **चाज्ञायाम्** ' 'अथ प्रस्थापयत्यपि ॥ ८५ ॥
३०७ **प्रेषणे** प्रेषयति च प्रेष्यति प्रहिणोति च' ।
३०८ '**संदेशे** वाचिकयते संदिशत्यात्मने ऽपि च' ॥ ८६ ॥
३०९ 'लिखत्य**क्षरविन्यासे** तथा लिपयति द्वयम्' ।
X ३१० 'उद्गालयत **उद्देशकृता**उद्देशयत्यपि । '
३११ '**प्रेरणे** प्रेरयत्यत्र क्षिपतीत्यात्मने ऽपि च ॥ ८७ ॥
कालयत्यस्यति तथा नुदतीति च पञ्चकम् । '
' सेवतेऽनुसरत्यत्र भजति श्रयतीति च ॥ ८८ ॥
आत्मनेऽनुरुणद्धीति तिस्र एवानुवर्तते ।
३१२ अनुजीवति **सेवायां** जुषतेऽनुचरत्यपि ' ॥ ८९ ॥
३१३ 'वृणीत इति **संभक्तौ** वलतीत्यात्मनेऽपि च' ।
x ३१४ 'सजूःकरोत्यात्मनेऽपि **सहे** सत्राकरोति च' ॥ ९० ॥
३१५ '**प्रापणे** लम्भयत्यत्र हरत्यपि नयत्यपि ।
वहतीत्यात्मनेऽप्येताः प्रापयत्यापयत्यपि ॥ ९१ ॥
'ये ण्यन्ता गमनार्थास्ते धातवो णीञ्समार्थकाः ।
विलम्बते कुण्ठति च व्याक्षिपत्यात्मनेऽपि च ॥ ९२ ॥
३१६ मन्दायति चिरयति **विलम्बे** ' 'अथ प्रतीक्षते ।

अनुपालयतीत्यत्र प्रतिपालयतीति च' ॥ ९३ ॥
३१७ 'प्रतीहारयति **द्वारप्रवेशनविधौ क्रिया'** ॥
३१८ 'संभ्राम्यति **त्वरायां** स्यात्त्वरते संभ्रमत्यपि ॥ ९४ ॥
३१९ अस्यामाविजते' 'चाथ **वैक्लव्ये** विक्लवत्यपि ।
३२० 'विह्वलत्यत्र टलति' (**क्लैव्ये** तु क्लीबते क्रिया ॥ ९५ ॥
×३२१ क्लीबायते' 'ऽथ **कौटिल्ये** वङ्कते कुटतीत्यपि । वक्रि कौटिल्ये ... कुन्दा...
भुजति न्युब्जति तथा कुब्जतीति समार्थकम्' ॥ ९६ ॥
×३२३ '**गुप्तवादे** मन्त्रयते' '**भेदे** तूपजपत्यदः' ।
×३२४ '**दंभेच्छायां** धीप्सतीति दिदम्भिषति धिप्सति' ॥ ९७ ॥
'संवर्मयति संनह्यत्यत्र संनह्यतेऽपि च ।
३२५ सज्जयत्यपि **संनाहे** तथा दंशयतेऽप्यदः' ॥ ९८ ॥
×३२६ 'अधिशेतेऽ**धिशयने**' '**ऽध्यासनेत्व**धितिष्ठति ।
×३२७ अध्यास्ते' 'ऽथाधिवसती**त्यधिवासे**' 'सकर्मकाः ॥ ९९ ॥
×३२८ षडमी स्युः' 'अथारोहे आरोहत्यधिरोहति ।'
३३० स्फुरति स्पन्दते **स्पन्दे**' '**चलने** तु चतुष्टयम् ॥ १०० ॥
चलति प्रेङ्खति तथा घट्टते वेल्लतीति च' ।
३३१ 'उत्सेधति तथोन्नह्यत्युच्छ्रयत्यात्मने द्वयम्' ॥ १०१ ॥
३३३ 'क्षोभते क्षुभ्यति **क्षोभे**' '**गमने** ऽञ्चति गच्छति ।
प्रतिष्ठते जिहीते च सरति व्रजतीयते ॥ १०२ ॥
पद्यते याति चरति सर्पत्ययति चञ्चति ।
ऋच्छति प्रवते गाते चलत्येति च टीकते ॥ १०३ ॥
अयते क्रामतीयर्ति क्रिया द्वाविंशतिर्मताः ।
'निर्गच्छति तु निर्याति निष्क्रामति निरेति च ॥ १०४ ॥
३३४ प्रायो **निःसरणार्थाः** स्युर्निःपूर्वा गमनार्थकाः' ।
३३५ 'तदा **त्वागमनार्थाः** स्युर्यद्याङ्पूर्वा भवन्त्यमी' ॥ १०५ ॥
'स्यात्प्रत्यावर्तते प्रत्यायाति व्यावोटतेऽपि च ।
३३६ प्रत्याङ्पुरःसराः **प्रत्यावृत्तौ** स्युर्गमनार्थकाः' ॥ १०६ ॥

३३७ 'अनुपूर्वास्त एव स्युः सर्वेऽनुगमनार्थकाः' ।
३३८ 'अटति स्यान्मृदुगतौ रिङ्गतीङ्गति च त्रयम्' ॥ १०७ ॥
×३३९ 'त्सरति छद्मगमने तथा ढौकत इत्यपि' ।
३४० लङ्घते तु प्लुतगतौ लंघत्युत्फलतीति च ॥ १०८ ॥
३४१ भेदे प्लुतगतेरेव वल्गाति प्लवते द्वयम्' ॥
३४२ 'उड्डीयते तूड्डयते खगतावुत्पतत्यपि ॥ १०९ ॥
३४३ 'धावति द्रवति क्षिप्रगमने जवतीत्यपि' ।
३४४ 'अटाट्यते चंक्रमीति द्वयं भ्रमणिकाविधौ ॥ ११० ॥
३४५ 'तद्भेदे भ्रमति भ्राम्यत्यपि पर्यटतीति च' ।
३४६ 'बंभ्रमीति तदाधिक्ये घूर्णते घूर्णतीति च' ॥ १११ ॥
चंचूर्यते जङ्गमीति पनीपद्यत इत्यपि ।
३४७ यङन्ता यङ्लुगन्ताश्च गत्यर्थाः कुटिले गमे' ॥ ११२ ॥
३४८ 'वलते परिवृत्तौ स्याद्घोटते परिवर्तते' ।
×३५१ 'अग्रे पुरति' 'नीचैस्तु फक्क' 'त्यतति संतते' ॥ ११३ ॥
×३५३ 'कुत्सिते द्राति' 'विकले द्वयं खञ्जति खोडति' ।
×३५५ 'प्रवते' 'वाति वातस्य' 'वहति प्रवहत्यपाम्' ॥ ११४ ॥
×३५७ 'धोरत्युत्तमवाहादेः' 'वत्सस्याटीकते क्रमे' ।
३५८ 'उद्गच्छत्युदये षट् स्युरुज्जिहीत उदीयते ॥ ११५ ॥
उदञ्चत्युदयत्येतावात्मने द्वावुदेति च ।
'गत्यर्थाः प्राय उत्पूर्वा उदयस्याभिधायकाः' ॥ ११६ ॥
३५९ 'उन्मीलत्युन्नमति च मेघाद्यभ्युद्गमे द्वयम्' ।
×३६० 'आक्रम्यते चाक्रमते ज्योतिःकर्तृक उद्गमे' ॥ ११७ ॥
३६१ 'स्त्यायतीति प्रसरति प्रसारे विसरत्यपि' ।
३६२ 'संचारे संचरत्येतत्तृतीयायुक्तमात्मने' ॥ ११८ ॥
३६३ 'स्रंसतेऽधोगतौ भ्रश्यत्यपि भ्रशत इत्यपि ।
३६४ पतत्यपि' 'द्रवादेस्तु क्षरति च्यवते तथा ॥ ११९ ॥
स्कन्दति श्च्योतति तथा स्रवत्यपि गलत्यपि ।

रीयते स्यन्दते चात्र श्चोततीति क्रिया नव' ॥ १२० ॥

३६५ 'विलीयते द्रवति च **कठोरक्षरणे** द्वयम् ।

३६६ '**अस्तंगमे**ऽस्तमयते निम्लोचत्यस्तमेति च' ॥ १२१ ॥

३६७ '**अंतर्द्धाने** तिरोन्तर्म्यामुभे धत्ते दधाति च '।

'अपक्रामत्यपैतीति नश्यत्यपि पलायते ॥ १२२ ॥

३६८ ' प्रायोऽपपूर्वा गत्यर्था **अपयाने** प्रकीर्तिताः' ।

३६९ '**पराङ्मुखत्वे** तु परावर्तते च पराञ्चति' ॥ १२३ ॥

'अतिक्रामत्युच्चरते तथातिचरतीत्यपि ।

३७० अत्येत्युल्लङ्घयत्याद्या धातवः **स्युरतिक्रमे**' ॥ १२४ ॥

३७१ '**निष्कासने** तु निष्क्रामत्यवकर्षति चात्र हि ।

निष्कालयति निःसारयति चेत्यादयः क्रियाः ' ॥ १२५ ॥

x ३७२ '**प्रवासे** तु प्रवसति तथा विवसतीत्यपि ' ।

x ३७३ '**रणे**ऽभिक्रमते शत्रून् प्रत्यभीतिमतो गतौ' ॥ १२६ ॥

x ३७४ '**अभियोगे**ऽभ्यवस्कन्दत्यभियुङ्क्ते इति द्वयम् ।

x ३७५ '**सेनया त्वभियाने** स्यादभिषेणयतीत्यदः ' ॥ १२७ ॥

'संनिकर्षति तु प्रत्यासीदत्यासीदतीत्यपि ।

३७६ परस्मैसंनिकृषते संनिधत्ते च **संनिधौ** ' ॥ १२८ ॥

x. ३७७ '**प्राप्तौ** प्राप्नोति लभते विन्दतेऽनुरुणद्धि च ।

अनुरुन्धे भावयते विन्दत्यासादयत्यपि ' ॥ १२९ ॥

३७८ 'व्याप्नोति व्यश्नुते व्याप्तौ वेवेष्टीत्यात्मनेऽपि च ' ।

पर्याप्नोति तु शक्नोति क्षमते प्रभवत्यपि ॥ १३० ॥

३७९ 'कल्पते पारयति च **सामर्थ्ये**ऽत्र पदानि षट् ' ।

३८० '**उद्यमे** चावगुरते उद्गूरयत इत्यपि ॥ १३१ ॥

उद्यच्छति तथोद्युङ्क्ते स्युः . पञ्चोद्यच्छतेऽपि च ' ।

३८१ '**वेष्टने** वेष्टत इति परिक्षिपति चात्मने ॥ १३२ ॥

परिश्रयति चेति द्वे वेष्टयत्यादयोऽपि च' ॥

३८२ 'निरुणद्धि निगृह्णात्यात्मने च द्वौ **निरोधने**' ॥ १३३ ॥

जयत्याक्रामति तथा धर्षयत्यपि धर्षति ।
त्रिलङ्घयत्यभिभवत्यपि च न्यक्करोति च ॥ १३४ ॥
३८३ तथा विजयते चास्कन्दतीत्यभिभवे नव ।
३८४ 'विशेषयत्यतिशये विशिनष्टि प्रकर्षति ॥ १३५ ॥
+विशेषत्यतिशेते च तथोत्कर्षयतीति च ।
उत्कृष्यते द्वयं कर्मकर्तर्यत्रातिरिच्यते ॥ १३६ ॥
य ×३८५ 'विस्मापयति विस्मेरयति चित्रीयतेऽद्भुते' ।
×३८६ 'धूनने कम्पयत्यत्र तथा वेपयतीति च ॥ १३७ ॥
त्रयं धुनोति धूनोति धुनातीत्यात्मनेऽपि च ॥
धुवत्येवं धूनयति चलयत्यपि चाष्टकम्' ॥ १३८ ॥
×३८७ 'आन्दोलयति तद्भेदे तथा प्रेङ्खोलयत्यपि ।
(तथा) दोलयति (च) प्रेङ्खयति हिन्दोलयत्यपि' ॥ १३९ ॥
×३८८ 'आविध्यति भ्रमयति विघूर्णयति च त्रयम् ।
३८९ 'विलोडयति मथ्नाति गाहते मन्थतीति च ॥ १४० ॥
×३९० 'त्रासने त्रासयत्यत्र भाययत्यपि खेटति' ।
×३९१ 'प्रयोजकाद्भये भीषयते भापयते च वा ॥ १४१ ॥
×३९२ 'तथा कुहयते विस्मापयते चेति तद्विदि' ।
३९३ 'कम्पे तु कम्पते त्वङ्गत्येजतेऽत्र च वेपते' ॥ १४२ ॥
लोलतीति क्रियाः षट् स्युः परिप्लवत इत्यपि' ।
×३९४ 'प्रस्विन्नीभवति स्वेदे तथा प्रस्विद्यतीति च' ॥ १४३ ॥
३९५ 'आहन्ति ताडयति च ताडने त्रासयत्यपि ।
३९६ प्रहरत्यात्मने चाथ' तद्भेदे कुट्टयत्यपि ॥ १४४ ॥
आस्फालयत्यर्दयति तथैवाघट्टयत्यपि' ॥ धातुपाठे नास्ति ।
३९७ 'विध्यति च्छिद्रयत्यत्र वेधे' 'भेदयति त्रयम् ॥ १४५ ॥
आहतेऽकर्मकत्वे स्यात्स्वकीयाङ्गे च कर्मणि' ॥
'युध्यते संप्रहरते संग्रामयत इत्यपि ॥ १४६ ॥
× ३९८ विगृह्णाति विगृह्णीते समरे कलहायते ।

×३९९ 'निध्वानयति **शङ्खादेर्ध्वाने**ऽत्र धमयत्यपि' ॥ १४७ ॥
×४०० '**वीणादे**र्वादयत्यत्र तथा वादयतेऽपि च' ।
क्वणयत्यत्र रणयत्यपि प्रक्वाणयत्यपि' ॥ १४८ ॥
×४०१–४०२ 'क्ष्वेडते **सिंहवन्नादे**' '**बाहुयुद्धे** नियुध्यते' ।
४०३ '**पराक्रमे** वीरयते पराक्रमत इत्यपि ॥ १४९ ॥
ओजायते शूरयते तथा विक्रमतेऽपि च' ॥
×४०४ 'प्रगल्भते **प्रगल्भत्वे** तत्र चोर्जस्वलायते' ॥ १५० ॥
×४०५ 'अरुष्करोत्यात्मनेऽपि व्रणयत्यङ्गचूर्णने' ।
×४०६ 'गोकर्तृकायां हिंसायां प्रस्तुम्पति सुडागमात् ॥ १५१ ॥
हिनस्ति संज्ञपयति सूदते हन्ति तर्दति ।
प्रमापयत्यर्दयते निबर्हयति हिंसति ॥ १५२ ॥
तृणेढि घातयति च शृणात्युज्जासयत्यपि ।
प्रतिष्किरत्यालभते कषते मारयत्यपि ॥ १५३ ॥
कषत्युन्माथयत्यत्र क्षिणोतीत्यात्मनेऽपि च ।
क्षेणोति द्रे विशसति निस्तर्हयति रघ्यति ॥ १५४ ॥
षड्विंशतिः सूदयति **हिंसायां** हिंसयत्यपि' ।
'क्षणोति क्षणुते पुथ्यत्यपि क्रथति तुम्फति ॥ १५५ ॥
४०७ मीनात्युन्नाटयत्याद्या **हिंसायां** विरलोदयाः' ।
×४०८ '**अर्दने** लुम्बयत्यत्र लुम्बत्यर्दत्यपि त्रयम्' ॥ १५६ ॥
४०९ '**पीडने** तु व्यथयति क्लिश्नाति च दुनोति च ।
तपते ग्लापयत्यत्र बाधते पीडयत्यपि ॥ १५७ ॥
धूपायति ग्लपयति तुदति क्लेशयत्यपि ।
दुःखाकरोत्यात्मनेऽपि तुदते खेदयत्यपि ॥ १५८ ॥
दुःखयत्युत्क्रमयति स्यात्कदर्थयतीत्यपि' ।
'भनक्ति त्रोटयति च रुजत्यामर्दयत्यपि ॥ १५९ ॥
×४१० भञ्जयत्यथ' '**तद्भेदे** मोटयत्यपि मोटति ।
×४११ मर्दयत्यत्र मुटति माथयत्यथ' '**पेषणे** ॥ १६० ॥

क्षुणत्ति म्रदते क्षुन्ते मृद्नाति च पिनष्टि च ।
संचूर्णयत्यथ ' ' ध्वंसयति क्षपयतीत्यपि ॥ १६१ ॥
४१३ **नाशने** नाशयति च तिस्रो ' ' ऽथोन्मूलने क्रियाः ।
उन्मूलयत्युत्खनति तथोज्झटयतीति च ' । ॥ १६२ ॥
' उत्पाटयत्युत्खनते षडुद्धरति चात्मने ।
४१४ उलुञ्चतीति **केशादेरुत्पाटनविधौ** क्रियाः ' ॥ १६३ ॥
४१५ ' **द्विधाकृतौ** पाटयति फालयत्यंशुकादिनः ' ।
४१६ ' निष्पीडयति निश्च्योतयति निर्गालयत्यपि ' ॥ १६४ ॥
४१७ ' **वैरशुद्धौ** प्रतिकरोत्यत्र निर्यातयत्यपि ' ।
४१८ ' **भङ्क्ते** प्रसभयत्यत्र पराजयत इत्यपि ' ॥ १६५ ॥
४१९ ' जयत्युत्**कर्षसंप्राप्तौ** द्वयं विजयतेऽपि च ' ।

**इति क्षत्रियचेष्टावर्गः ॥**

४२० ' **कर्षणे** तु कृषत्यत्र कृषते कर्षतेऽपि च ॥ १६६ ॥
रदत्येवं विलिखति खनत्यपि हलत्यपि ' ।
४२१ ' बीजाकरोत्**युप्तकृतौ** ' ' स्याद्द्वितीयाकरोत्यपि ॥ १६७ ॥
४२२ शम्बाकरोति द्विगुणाकरोति **द्विःकृषौ** त्रयम् ' ।
४२३ ' तृतीयात्रिगुणाभ्यां च करोति **त्रिःकृषौ** मतम् ' ॥ १६८ ॥
' आख्यातानि खनत्यादीन्यूनीयानि चात्मने ' ।
४२४ ' आलोडयति **संगाहे** तथा संगाहतेऽपि च ' ॥ १६९ ॥
४२५ **हलिग्रहे** हलयति हलिरुक्तो महद्धलम् ' ।
४२६ ' वपत्युप्तौ प्रकिरति वपतेऽप्यथ ' ' **रोपणे** ॥ १७० ॥
४२७ ' मूलयत्यपि संरोहयति संरोपयत्यपि ' ॥
४२८ ' **स्थिरतायां** ध्रुवत्यत्र मूलति प्रतितिष्ठति ' ॥ १७१ ॥
४२९ ' **शोषे** तु शुष्यति तथा शुण्ठत्याश्यायतेऽपि च ।
४३० वायतीति च ' ' **सेके** तु सिञ्चत्यार्द्रीकरोति च ॥ १७२ ॥
आत्मनेऽपि द्वये वर्षत्यार्द्रयत्यपि शीकते ।
उनत्ति क्लेदयति च क्लोपयत्युक्षतीति च ' ॥ १७३ ॥

४३१ 'आर्द्रीभवत्यार्द्र**भावे** क्लिद्यति स्तिम्यतीति च' ।
४३२ '**वर्धने** वर्धयत्यत्र बृंहयत्येधयत्यपि' ॥ १७४ ॥
४३३ '**संचये** संबिभर्तीति संचिनोत्यात्मने त्रयम् ।
तथैवोपचिनोत्यत्र संभाण्डयत इत्यपि' ॥ १७५ ॥ ॥
४३४ '**राशीकारे** पुञ्जयति कूटयत्यत्र युग्मकम्' ।
४३५ 'उच्चिनोति शिलत्युञ्छे त्रयमुञ्छयतीत्यपि' ॥ १७६ ॥
४३६ 'अवहन्तीति **वैतुष्यकरणे** कण्डयत्यपि ।
फलीकरोति वितुषीकरोतीत्यात्मने द्वयम् ॥ १७७ ॥
परेति स्यात् पुरापुनात्यात्मनेऽपि प्रस्फोटयति तत्समाः' । प्रस्फोटनं तु शूर्पेऽस्त्री ।
४३७ 'मिमीते मायते **माने** तथा मातीत्यकर्मकम्' ॥ १७८ ॥
४३८ 'तोलयत्यत्र **हेमादिमाने** तुलयतीत्यपि' ।
'पणते दीव्यति तथात्मनेप्यवहरत्यदः ॥ १७९ ॥
४३९ **व्यवहारे**ऽपमयते परिवर्तयतीत्यपि' ।
४४० 'विक्रीणीते निमयतेऽवक्रीणीते च **विक्रये**' ॥ १८० ॥
४४१ 'सत्याकरोत्यात्मनेऽपि तुल्ये सत्यापयत्यपि' ।
४४२ 'क्रीणीते विनिमयते क्रीणा...ते **क्रये** तिस्रः' ॥ १८१ ॥
४४३ 'स्यान्नैपुण्ये निपुणति निष्णाति च दक्षते चात्र'
X४४५ '**अर्जने**ऽर्जत्यर्जयति' '**गणने** गणयत्यपि' ॥ १८२ ॥
४४६ 'कलयत्यपि संख्याति' '**गुणने** गुणयत्यपि । सम्पूर्वस्य स्यात्...प्रयोग नेति न्यासकार
४४७ आहन्तीति द्वयं' X**प्रोञ्छे** प्रोञ्छत्युत्सारयत्यपि' ॥ १८३ ॥
४४८ '**तद्भेदे** लुम्पते लुम्पत्यत्र मार्जति च त्रयम्' ।
X ४४९ '**विभागे** वण्टयत्यत्र विभजत्यात्मनेऽप्यदः ॥ १८४ ॥
विभाजयत्यंशयति वण्टत्यपि च पञ्चकम्' । प
'तिरस्करोत्यपिदधात्यत्र व्यवदधात्यपि ॥ १८५ ॥
पिदधात्यावृणोतीति संवृणोति स्तृणोति च ।
स्तृणातीत्यात्मनेऽप्यष्टौ तथा संगोपयत्यपि' ॥ १८६ ॥
अपवारयति च्छादयति स्थगयतीत्यपि ।

४५१ 'तिरयत्यावृतौ, 'चाथ **निक्षेपे** निक्षिपत्यपि ॥ १८७ ॥
निक्षिपत्यात्मनेऽपि द्वौ तथोपनिदधाति च ।
न्यस्यति प्रतिदत्ते' 'ऽथ निष्क्रयीकुरुते तथा ' ॥ १८८ ॥
स्यात्प्रत्युपकरोत्यत्र निर्ऋणीभवतीति च' ।
४५२ 'प्रत्यर्पयति तु **न्यासार्पणे** निर्यातयत्यपि' ॥ १८९ ॥
'अपेक्षतेऽभ्यर्थयते वनुतेऽर्दति नाथति ।
४५३ '**याच्ञायां** भिक्षते मार्गयते याचति याचते' ॥ १९० ॥
'मार्गत्यन्विच्छति गवेषयत्यन्विष्यतीति च ।
अन्वेषते मार्गयति विचिनोत्यात्मनेऽप्यदः ॥ १९१ ॥
४५४ **अन्वेषणे** मृगयते मृग्यतीति नव क्रियाः' । कण्ड्वादिः
४५५ '**दोहानुकूल्ये** दुग्धे गोः' 'प्रस्नुते च स्वयं **स्रवे**' ॥ १९२ ॥
x ४५६ ' दोग्धि दुग्धे त्रयमिदं प्रपूरयति **पूरणे**' ।
x ४५७ ' स्नवे तु स्रौत्यथो' ' यौति विप्रयुङ्क्ते वियौति च ॥ १९३ ॥
४५८ वियोजयति विश्लेषयति चात्र **वियोजने** ।
वियुज्यते विघटते तथा विश्लिष्यतीति च ॥ १९४ ॥
विच्छिद्यते द्वयं कर्मकर्तरि व्यतिरिच्यते' ।
४५९ '**मिश्रणे** मिश्रयत्यत्र तथा संयोजयत्यपि ॥ १९५ ॥
प्रकारार्थे प्रकारं वचन। क्षयत्यत्र संमेलयति च्छुरयतीत्यपि ।
संयुनक्ति च सप्तात्र क्रियाः संघट्टयत्यपि' ॥ १९६ ॥
संयुज्यतेऽतिसंयौति संपृणक्त्यात्मनेऽपि च ।
संभिद्यते कर्मकर्तर्यत्र संसृज्यतीत्यदः ॥ १९७ ॥ दिवादि रुधादि आत्मनेपदी
४६० 'संबध्नाति मिलत्यत्र संगच्छति च संगतौ ' ।
विना कर्मात्मने चात्र तथा संनिपतत्यपि ॥ १९८ ॥
उपसीदत्युपनमत्यत्र स्यादुपकण्ठते' ।
४६१ **तद्भेदे** समवैतीति सचते चासजत्यपि ॥ १९९ ॥
व्यतिषज्यत इत्येतत्पदं स्यात्कर्मकर्तरि, ।
उत्फणत्युच्छलति च तथोद्रिच्यत इत्यपि ॥ २०० ॥


छुर् to besmear = Mālati. 9.30.

४६२ 'उत्सिच्यते तथोत्सेके द्वितयं कर्मकर्तरि' ।
४६३ '**उत्क्षेपणे** तूलयति तथोत्क्षिपति चात्मने ॥ २०१ ॥
उदस्यत्युद्धरति च चत्वार्युत्तम्भयत्यपि ।
४६४ '**आनीता**वानयत्येतदाहरत्यपि चात्मने ॥ २०२ ॥
'संमार्जयति संमार्ष्टि तथा परिसमूहति ।
४६५ 'आत्मनेऽपि च **संमार्गे**' 'उपदेग्ध्युपलिम्पति' ॥ २०३ ॥
४६६ 'आत्मनेऽपि पदद्वन्द्वं गोमयत्युपलेपने' ।
४६७ **संदीपने** ज्वलयति तथा संदीपयत्यपि ॥ २०४ ॥
'उद्द्योतयति संधुक्षयति च ज्वालयत्यपि' ।
४६८ 'पाके तु रन्धयत्यत्र पचतीत्यात्मनेऽप्युभे ॥ २०५ ॥
अधिश्रयति च श्राति श्रपयत्यपि रध्यति ।
रध्यते पच्यते कर्मकर्तृकेऽत्र च राध्यति' ॥ २०६ ॥
४६९ 'भर्जते **पाकभेदे** स्यात्त्रयं भृज्जति भृज्जते' ।
४७० 'शूलाकरोत्यात्मनेऽपि **शूलपाके** पदं मतम्' ॥ २०७ ॥
४७१ '**द्रवीकृतौ** लीनयति लयति द्रावयत्यपि ।
लालयत्यपि वा लाययति लापयतीत्यपि' ॥ २०८ ॥
४७३ 'संदधात्यात्मने चाभिषुणोत्य**भिषवे** द्वयम्' ।
४७४ स्वदते रोचते **रुच्यां**' '**संस्कृतौ** संस्करोत्यदः ॥ २०९ ॥
४७५ आत्मने' **प्रतियत्ने** तु स्यादुपस्कुरुते पदम् ।

इति वैश्यक्रियावर्गः ॥

४७६ 'आत्मने वयति व्यूतावूयते' 'ऽथ विषीव्यति ॥ २१० ॥
४७७ तथा निषीव्यति **स्यूतौ** परिषीव्यति सीव्यति' ।
'तक्षति श्यति तक्ष्णोति कृश्यति ह्रसयत्यपि ॥ २११ ॥
४७८ **तक्षणे** त्वक्षति तथा परिवासयतीत्यपि' ।
४८० **उल्लेख** उल्लिखत्येकम्' '**उत्कीर्णौ** तूत्किरत्यदः' ॥ २१२ ॥
४८१ 'संक्ष्णुते **तीक्ष्णकरणे** क्ष्णौति चोत्तेजयत्यपि ।

निशिनोति निशीशांसत्यात्मनेऽपि पदद्वयम् ॥ २१३ ॥
४८२ **छेदने** कृन्तति च्छिन्त्ते च्छिनत्ति च्छेदयत्यपि ।
४८३ छ्यति बर्धयतीत्यत्र वृश्चतीत्यथ' **'तद्विदि** ॥ २१४ ॥
चोटयत्यत्र चुटति च्छुटति च्छोटयत्यपि' ।
४८४ 'प्रायो लुनीते **धान्यादेश्छेदे** दाति लुनाति च ॥ २१५ ॥
४८५ त्रुटति त्रुटयति **च्छेदे** च्छिद्यते कर्मकर्तृके' ।
४८६ 'भिन्त्ते विदारयति च भिनत्ति च **विदारणे** ॥ २१६ ॥
आखण्डयत्यपि स्फोटयति भेदयति द्यति' ।
४८७ 'परीक्षते निकषते **शुद्धत्वादिविनिर्णये**' ॥ २१७ ॥
४८८ प्लोषति प्लुष्यति दहत्योषति ज्वलयत्यपि' ।
४८९ 'मुष्णाति चोरयत्यत्र लुण्ठयत्यपि **मोषणे** ॥ २१८ ॥
आत्मने चापि हरति म्लोचत्यत्र च लुंटति' ।
४९० उल्लुण्ठत्याच्छिनत्तीति द्वयमेतद्बलाद्धृतौ' ॥ २१९ ॥
४९१ 'प्रसहत्यात्मनेऽप्यत्र हठतीति **बलात्कृतौ** ।
४९२ 'निष्कुष्णाति तु **निष्कर्षे** तथा निष्कर्षतीत्यपि ॥ २२० ॥
×४९३ स्यान्निष्कुलाकरोत्येतदात्मने' 'ऽत्र तु **सव्यथे** ।
× द्वे निष्पत्रासपत्राभ्यां करोति कुरुते पदे' ॥ २२१ ॥
×४९४ 'लक्षयत्यङ्कयत्यत्र लाञ्छतीति च **लक्षणे**' ।
'संदानयति बध्नाति तथा संद्यति कीलति ॥ २२२ ॥
नह्यतीत्यात्मने त्रीणि संयच्छति शिनोति च ।
×४९६ पाशयत्यपि **बन्धे**' 'ऽथ विपाशयति **मोचने** ॥ २२३ ॥
४९७ विमोचयत्यथ' **'स्तंभे** स्तम्भते स्कंभते तथा' ।
४९८ 'अथ **स्तब्धीकृतौ** स्तुंभयति स्कंभयतीत्यपि' ॥ २२४ ॥
४९९ 'प्रतिबध्नाति च तथा **विघ्ने** प्रत्यर्थयत्यदः ।
तथा विहन्त्यंतरेति प्रत्यूहत्यात्मनेऽपि च ॥ २२५ ॥
विघ्नयत्यंतरयति' 'प्रत्यवैति तु दुष्यति ।
५०० दुष्करोत्यघयत्यत्र **दुष्कृते** पंकयत्यपि' ॥ २२६ ॥

५०१ '**संततौ** संतनोतीति तथा संतनुतेऽपि च ।
अत्र संत्रायते संतानयतीति चतुष्टयम् ॥ २२७ ॥ सन्तायते इति पाठः।

**इति शूद्रक्रियावर्गः ॥**

इति प्रयुक्ताख्यातमञ्जर्यां द्वितीयः काण्डः ॥ २ ॥

---

प्रकीर्णकसनाद्यन्तनानार्थास्तु तृतीयके ।
अकर्मकाश्च काण्डेऽस्मिन्वर्गाश्चत्वार ईरिताः ॥ १ ॥
यानि पूर्वमसंगत्या नैवाख्यातपदानि ह ।
आख्यातानि प्रवक्ष्यन्ते तानि वर्गेऽत्र कानिचित् ॥ २ ॥
५०२ 'प्रभाति व्युच्छति **व्युष्टे** प्रत्यूषति विभाति च ।'
५०३ 'अवदायति **शुक्लत्वे** श्वतते च क्रियाद्वयम्' ॥ ३ ॥ दैप् शोधने
'रज्यति त्रीणि रजति लोहितायति चात्मने ।
५०५ शोणतीति च **रक्तिम्नि**' '**हरित्वे** हरितायति' ॥ ४ ॥
'नीलायते नीलति च तथा श्यामायते पदम्' ।
५०६ '**वृष्टिरोधे**ऽवगृह्णाति तथावस्कन्दति द्वयम्' ॥ ५ ॥
५०७ '**सूर्येन्दुग्रहणे** तूपप्लवते चोपरज्यति' ।
५०९ 'उत्कोचयति **तूत्कोचे**' 'दरिद्राति तु **दुर्गतौ**' ॥ ६ ॥
५१० '**व्यभिचारे** व्यभिचरत्यन्यथा भवतीत्यपि' ।
५११ **दूरीकृतौ** दवयति विप्रकर्षयतीत्यपि' ॥ ७ ॥
५१२ 'द्राघयत्यायमयति स्याद्दी**र्घीकरणे** द्वयम्' ।
५१३ '**उद्वासे** तूद्वसत्यत्र तथोच्छिन्नीभवत्यपि ॥ ८ ॥ छिद्०
५१४ उत्सीदत्युज्जटति च' '**शेषे** तु परिशिष्यते ।
अत्रावशिष्यत इति द्वितयं कर्मकर्तरि' ॥ ९ ॥
५१५ '**संघाते** पिण्डयत्यत्र स्त्यायत्यपि समूहति' ।
५१७ 'कण्डूयति तु **कण्डूतौ**' '**घृष्टौ** कर्षति घर्षति' ॥ १० ॥
५१८ 'उपसंहरतीति स्यात्तथा निगमयत्यपि ॥

**इति प्रकीर्णवर्गः ॥** 3 only on this page.

धातोस्तुमर्थादिच्छायां सनि रूपं बुभूषति ॥ ११ ॥
इचिच्छिषत इत्यादि पूर्ववच्चात्मनेपदम् ।
नाम्नो मान्ताव्ययान्यस्मात्काम्येयिनि च कर्मणः ॥ १२ ॥
आत्मनस्तत्तदिच्छायामर्थे स्यातामुभे क्रिये ।
पुत्रकाम्यति पुत्रीयत्यृकाम्यत्यृच्यतीति दिक् ॥ १३ ॥
एवं कर्मण आचार आधार उपमार्थकात् ।
यथा पुत्रीयति च्छात्रं मञ्चे सौधीयतीति दिक् ॥ १४ ॥
'उपमानात्तथा कर्तुराचारार्थे क्रियाद्वयम् ।
आये लोपेऽस्य च यथा 'गर्दभोऽश्वायतेऽश्वति' ॥ १५ ॥
'स ओजोप्सरसोर्नित्यं पयआदेश्च वा सलुक् ।
कन्याप्सरायते चौजायते हि कं पयायते ॥ १६ ॥
पयस्यते तथाऽन्यस्मात्सलोपे वा दिगूह्यताम्' ।
'भृशादेश्च भवत्यर्थेऽच्व्यर्थे रूपं भृशायते ॥ १७ ॥
सुमनायत इत्यन्यदूह्यं व्यञ्जनलोपतः ॥
सुमना उन्मना ओजश्चपलः पण्डितः शुचिः ॥ १८ ॥
मन्दभद्रोत्सुका नीलशीघ्राद्याश्च भृशादयः ।
'तत्रैव लोहितादेः स्याद्विकल्पेनात्मने पदम् ॥ १९ ॥
लोहितायति पूर्वो दिक् सूर्योऽयं लोहितायते ।
लोहितःश्यामजिह्मौ च गर्वो दुःखं सुखं कृपा ॥ २० ॥
मूर्छा निद्रा च करुणा हर्षाद्या लोहितादयः' ।
पापार्थक्रमणे कष्टादिभ्यः कष्टायतेमुखाः ॥ २१ ॥
बाष्पोष्मफेनधूमादुद्वान्तौ बाष्पायतेमुखाः' ।
'सुखादेरनुभूत्यर्थे शब्दाः सुखायतेमुखाः' ॥ २२ ॥
सुखदुःखास्रकृपणकरुणालीककृत्स्नवत् ।
प्रतिपाद्यं च विद्वद्भिः सुखादिकमुदीरितम् ॥ २३ ॥
'शब्दादिभ्यः कृतौ शब्दायते वैरायतेमुखाः ।
शब्दो वैरं च कलहमेघवेगाभ्रदुर्दिनम् ॥ २४ ।

राका–सुदिन–नीहारादयः शब्दादयः स्मृताः ’ ।
कण्ड्वादेस्तत्र कण्डूयत्यात्मनेऽपि ह्वणीयते ॥ २९ ॥
असूयतीत्यादिकं च पूर्वं किंचित्प्रदर्शितम् ।
व्यञ्जनादेर्भृशे पौनःपुन्ये चैकस्वरात्क्रियाः ॥ २६ ॥
बोभूयतेमुखा धातोर्भृशे नैव शुभे रुचेः ।
बहुलं लुकि तत्रापि बोभवीत्यादिका मताः ॥ २७ ॥
गत्यर्थेभ्यश्च कौटिल्ये, लुपादेर्भावगर्हणे ।
तेन जङ्गम्यते लोलुप्यत इत्यादिकं भवेत् ॥ २८ ॥
प्रयोजकस्य व्यापारे धातोरिणि कृते सति ।
भावयत्यादि तत्रोह्यमिणन्ताच्चात्मनेपदम् ॥ २९ ॥
‘ तत्करोति तदाचष्टे’ इत्यर्थे इति लिङ्गतः ।
बटुं मुण्डयति क्षेमयतीत्याद्याः क्रिया मताः ॥ ३० ॥
अन्यतोपि व्रतश्लोकवीणासेनादिनामतः ।
भवन्ति तत्तदर्थेषु व्रतयत्यादयः क्रियाः ॥ ३१ ॥
सत्यवेदार्थतस्त्वापिः स्यात्सत्यापयतीति दिक् ।

इति सनादिवर्गः ॥

अथोच्यन्तेऽत्र नानार्थाः ‘ सत्तायां **भवति** क्रिया ॥ ३२ ॥
आप्तौ जन्मनि च क्वापि प्राकट्येऽप्युद्भवत्यसौ ।
‘ साहित्ये संभवे च स्यात्क्रिया **संभवती**त्यसौ ’ ॥ ३३ ॥
‘आद्योपलम्भे सामर्थ्ये **प्रभवत्यपि**’ ‘वैभवे ।
व्याप्तौ च स्याद्विभवति’ ‘मानसे च **जपत्यदः**’ ॥ ३४ ॥
‘याच्ञोपतापैश्वर्येषु नाथत्याशिषि **नाथते** ’ ।
‘स्तवेऽभिवादने चापि वन्दते **ह्लादते** पुनः ॥ ३५ ॥
**ह्लादे** शैत्ये च’ ‘संक्लेशहिंसयोः **क्नुयती**त्यदः ’ ।
याच्ञाहिंसागतिष्व**र्दत्य** ’ थ ‘**क्रन्दति** ’ रोदने ॥ ३६ ॥
आह्वाने ’ ‘**लङ्घते** तु स्यादुपवासे गतावपि ’ ।
‘ कम्पने **त्वङ्गति** गतौ’ ‘याच्ञागत्योस्तथा**श्वते**’ ॥ ३७ ॥

'तयोश्च पूजने **चाञ्चत्यथ**' 'मोहे समुच्छ्रये ।
**मूर्छती**त्यथ ' 'कौटिल्ये स्वल्पीभावे च **कुञ्चति** ' ॥ ३८ ॥
' शब्दे **गर्जति** भादे च' '**हिण्डते**ऽनादरे गतौ ' ।
'**कटत्या**वृतिगत्योः' 'स्याच्छ**ट्ती**त्यवसादने ॥ ३९ ॥
तथा विशरणे' 'दानदययो**र्दयते** पदम् ' ।
' **परिप्लवत** इत्येतच्चपले लाघवेऽपि च ' ॥ ४० ॥
'**पूयते** स्याद्विशरणे दुर्गन्धे' '**क्नूयते** त्विह ॥
उन्दे शब्दे' 'स्फीततायां पालने चापि **तायते** ' ॥ ४१ ॥
' **क्रम्यते क्रमते** स्यातां तायनोत्साहवृत्तिषु ' ॥
'गतौ जग्धौ च **चरति** ' 'निष्पत्तौ च **फलत्यदः** ॥ ४२ ॥
तथा विशरणे चाथ' ' **कलते** शब्दसंख्ययोः ' ॥
' **जयत्य**रिपराभूतौ स्यादुत्कर्षेऽप्यकर्मकः ' ॥ ४३ ॥
' **अवत्य**ष्टादशार्थे च प्रायः प्रीणनरक्षयोः ' ॥
' स्यान्मौण्ड्येज्योपनयनव्रतादेशेषु **दीक्षते** ' ॥ ४४ ॥
संदीपने जीवने च **धुक्षते** ' '**शिक्षते** पुनः ॥
ज्ञीप्साविद्याग्रहणयोः' 'दीप्तौ स्वादे च **रोचते** ' ॥ ४५ ॥
' **कासते** करुजे शब्दे दीप्तौ चायं प्रयोगतः ' ॥
गतौ कम्पे च **चलति**' ' हर्षे तु **मदयत्यदः** ॥ ४६ ॥
ग्लेपने चाथ' ' फूत्कारे **क्रोशत्या**ह्वानरोदने ॥
शिक्षणे क्षपणे चापि क्रिया **विनयती**त्यसौ ॥ ४७ ॥
अवसादे विशरणे **सीदती**त्यथ' '**धावति** ।
गतिशुद्ध्योः' '**मेधती**ति मेधाहिंसनसंगमे ' ॥ ४८ ॥
' मिथ्याज्ञाने घूर्णने च **भ्रमति भ्राम्यती**त्युभे ।
'**ह्वयते** स्पर्धने हूतौ' '**चायती**क्षणपूजयोः' ॥ ४९ ॥
' **वहति** प्रापणस्पन्दधृतिष्वथ' '**धमत्यदः** ।

निःस्वनाननफूत्कृत्योः ' '**वपत्युप्तौ** च मुण्डने' ॥ ९० ॥
'प्लवे**तरत्यु**त्तरणे' '**क्षरती**ति स्रवे गतौ ।
'गतौ **स्कन्दति** शोषे च स्पन्दे ' 'चाथमरुद्गतौ ॥ ९१ ॥
पावित्र्ये **पवते** ' 'हिंसाघर्षयोस्तु **कशत्यदः** ' ।

इति भ्वादिः ॥

'पीडनेऽप्युप**हन्त्ये**तदशुचीकरणेऽपि च' ॥ ९२ ॥
'मिश्रणेऽमिश्रणे **यौति**' '**सौति** तु प्रसवैश्वययोः' ।
'ज्ञानविश्वासयोः **प्रत्येत्य**' '**ध्येत्यभि**गमे स्मृतौ' ॥ ९३ ॥

इत्यदादिः ॥

'**पिपर्ति** पूरणे त्राणे' '**बिभर्ति** भृतिपोषयोः ।
**दधाति** ' चाथ' विश्वासस्पृहयोः **श्रद्दधात्यदः**' ॥ ९४ ॥
'संकल्पे वञ्चने च स्या**दभिसंदधत** इत्यपि ' ।
' **अनुसंधत्त** इत्येतद्विचारप्रत्यभिज्ञयोः ' ॥ ९५ ॥

इति जुहोत्यादिः ॥

'विजिगीषाद्युतिक्रीडागतिस्तुतिषु **दीव्यति** ' ।
'संराद्धिहिंसयो**रध्यत्य**' 'ङ्गीकारे तु संविदि ॥ ९६ ॥
**प्रतिपद्यत** इत्येतद्' ' दर्पे हर्षे च **माद्यति** ।
क्षीबत्वे' ' चाथ हर्षे च गर्वितत्वे च **दृप्यति**' ॥ ९७ ॥

इति दिवादिः ॥

'पीडने मन्थने चात्र संधानेऽ**भिषुणो**त्यदः ' ।
'गतिवृद्ध्यो**र्हिनोतीति**' '**कृणोति** कृतिहिंसयोः' ॥ ९८ ॥

इति स्वादिः ॥

'ऊर्युर्यूररीभ्यश्च **करोति कुरुते** पदे ।
विस्ताराङ्गीकरणयोः ' ' विक्रियायां त्वकर्मकम् ॥ ९९ ॥
पदं **विकुरुते** शब्दकर्मकार्थे च संमतम् ।

इति तनादिः ॥

**अनक्ति** म्रक्षणे व्यक्तौ' '**विनक्ति** चलने भये' ॥ ६० ॥
'सुरते चोपभोगे च **संभुङ्क्त** इति कीर्तितम्' ।

इति रुधादिः ॥

'**शृणाति** मिश्रणे पाके' '**प्रीणाति** त्राणपूरणे' ॥ ६१ ॥
'**गृह्णात्ये**तदुपादाने ज्ञाने **गृह्णीत** इत्यपि' ।
**अवष्टभ्नाति** तु प्रोक्तमन्तिकालम्बनार्थयोः ॥ ६२ ॥

इति क्र्यादिः ॥

'**अङ्कय**त्यंकने दृष्टौ' 'गतौ **वाजयती**त्यदः ।
शरसंस्करणे' चाथ 'मारणज्ञापनादिषु ॥ ६३ ॥
**ज्ञपयत्यथ**' 'भूषायां प्रमोदे **मण्डयत्यदः**' ।
'छेदने पूरणे चापि पदं **वर्धयती**त्यदः ॥ ६४ ॥
भेदे' 'निमन्त्रणाहूत्योरामन्त्रयत इत्यदः' ।
**निर्यातयति** वैरस्य शुद्धौ न्यासार्पणे तथा ॥ ६५ ॥
'वर्णक्रियागुणोक्त्योस्तु **वर्णयत्यथ**' 'जीवने ।
बले चोर्जत्यू**र्जयति**' ।

इति चुरादिः ॥

पदं **व्रतयती**त्यदः ॥ ६६ ॥
भोजने तन्निवृत्तौच'

इति नामधातुः ॥

'ह्रीरुषोस्तु **ह्रिणीयते**' ।
**वल्गूयति** तु माधुर्ये पूजने च प्रकीर्तितम् ॥ ६७ ॥

इति कंड्वादिः ॥

इत्यनेकार्थवर्गः ।

सकर्मकोप्यकर्मा स्याद्विवक्षा चेन्न कर्मणः ।
काप्यकर्मापि कर्माढ्यो भावनायां भवेदिह ॥ ६८ ॥

अतः स्यान्नातिनैयत्यमकर्मकसकर्मणोः ।
धातवोऽथापि लिख्यन्ते प्रायो ये स्युरकर्मकाः ॥ ६९ ॥
सत्तायामुदये स्नेहे मोहस्नानविशुद्धिषु ।
शयनाशनलज्जासु जीवने मरणे क्रुधि ॥ ७० ॥
त्वरायां क्रीडने नृत्ये रोदनस्थितिदीप्तिषु ।
भये स्पन्दे च संदेहे रोषस्पर्धाक्षयेष्वपि ॥ ७१ ॥
मदोद्वेगप्रकम्पेषु व्यथाजागरवृद्धिषु ।
जरायां स्वेदनोत्पत्त्योर्मूत्रणे ह्रदने तथा ॥ ७२ ॥
विकासे नीलने ह्रासे नाशस्फूर्तिसमृद्धिषु ।
तोषे दोषे विरागे च विषादोन्मादसिद्धिषु ॥ ७३ ॥
प्रभातस्तम्भदम्भेषु शुक्लिमादिगुणेषु च ।
ध्वाने क्लीवे दरिद्रत्वे ग्लानिगर्वश्रमेष्वपि ॥ ७४ ॥
क्षोभादिषु तथार्थेषु धातवः स्युरकर्मकाः ।
आय्यन्ता लोहिताद्याश्च तथा ये नामधातवः ॥ ७५ ॥
आत्मनस्तत्तदिच्छार्था भवेयुस्तेऽप्यकर्मकाः ।
अर्थैक्येऽप्यर्थभेदेऽपि स्वयमेव द्विधा स्थितिम् ॥ ७६ ॥
एकः क्वचिद्व्रजेद्धातुरुपसर्गवशात्तथा ।
यथा कुम्भात्क्षरत्यम्भो, मदं क्षरति कुञ्जरः ॥ ७७ ॥
'जयतीश्वर उत्कर्षे' जयत्यभिभवे रिपुम् ।
"निखिलं वेत्ति गोविन्दः" संवित्ते माधवो यथा ॥ ७८ ॥
"वृन्दावने वसत्यस्मिन्" ' हरिरावसति व्रजम् ' ।
धात्वर्थं धावते कश्चित्कश्चित्तमनुवर्तते ॥ ७९ ॥
तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते ।
दुह्याद्या नीवहाद्याश्च धातवो ये द्विकर्मकाः ॥ ८० ॥
ते विस्तरभयादत्र ग्रन्थे विलिखिता नहि ।

अत्रात्मने पदादेस्तु प्रक्रिया नहि कीर्तिता ॥ ८१ ॥
तनस्ततो व्याकरणाद्विज्ञेया सा विचक्षणैः ।
मुदा यथार्थनाम्नीयं कविसारङ्गरङ्गदा ।
सेव्यतां कोविदगणैः प्रयुक्ताख्यातमञ्जरी ॥ १ ॥

इत्यकर्मकवर्गः ।

इति प्रयुक्ताख्यातमञ्जर्यां तृतीयः काण्डः ॥ ३ ॥

**संपूर्णोऽयं ग्रन्थः ।**



श्रीः ।

# श्लोकयोजनिकोपायः ।

बालमित्रप्रबोधाय नत्वा रामं सलक्ष्मणम् ।
श्लोकयोजनिकोपायं रघुरामस्तनोम्यहम् ॥ १ ॥
युष्मदस्मत्प्रयोगाभ्यां भिन्नं नामाभिधीयते ।
नाम युष्मत्तथा चास्मत्कर्तृरीतिरितीयती ॥ २ ॥
आद्यमध्योत्तमैः पुंभिर्योजनीया प्रयत्नतः ।
नामकर्तरि चाद्यस्य क्रियाः पुंसः प्रयुज्यते ॥ ३ ॥
युष्मत्कर्तरि मध्यस्य पुंसः क्रियापदं भवेत् ।
अस्मत्कर्त्ता यदा च स्यादुत्तमस्य क्रियापदम् ॥ ४ ॥
एकद्विबहुवाक्यस्थः कर्त्ता सर्वत्र गीयते ।
एकद्विबहुवाक्यस्था क्रिया योज्या तथा तथा ॥ ५ ॥
क्वचित्क्रियापदं न स्यात्कर्तृसत्त्वे तदाहरेत् ।
क्वचित्कर्तृपदासत्त्वे क्रियासत्त्वे तदाहरेत् ॥ ६ ॥
प्रथमान्तो यदा कर्ता प्रत्ययस्तूक्तकर्तृकः ।
समप्रत्ययका तत्र द्वितीयाऽनुक्तकर्मणि ॥ ७ ॥
प्रथमान्तं यदा कर्म प्रत्ययस्तूक्तकर्मकः ।
समप्रत्ययकं तत्र तृतीयाऽनुक्तकर्तरि ॥ ८ ॥

---

१ कर्ता सर्वत्र 'क्वचिदेकवचनान्तः, क्वचिद्द्विवचनान्तः, क्वचिद्बहुवचनान्तः' इत्येवमेव भवति यत्र यद्वचनान्तः कर्ता भवेत्, तत्र तद्वचनान्तमेव क्रियापदम् योज्यम् । २ क्रियापदम् । ३ कर्तृपदम् । ४ समानवचनका । ५ समानवचनकम् ॥

कर्तृकर्मक्रियास्तावच्छ्लोके योज्यास्ततः परम् ।
किमो रूपं पुरस्कृत्य तृतीयादि नियोजयेत् ॥ ९ ॥
ल्यबन्तं च तुमन्तं च क्त्वान्तं कर्मविभूषितम् '
अन्वयस्थपदानां च यथालिङ्गं विशेषणम् ॥ १० ॥
यथाविभक्ति वाक्यं च बालानां हितसिद्धये ।
रघुरामकृता ह्येताः कारिका दश सैकिकाः ॥ ११ ॥

इति श्रीमाधवाश्रमकृपापात्ररघुरामकृता एकादश कारिकाः समाप्ताः ॥

---

१ यथाऽत्रैव प्रथमश्लोके 'अहम्' इत्यस्मत्कर्ता प्रथमैकवचनान्तः, तत्समानवचनमेव उत्तमपुरुषैकवचनान्तम् 'तनोमि' इति क्रियापदम् । 'श्लोकयोजनिकोपायम्' इति कर्म । ततश्च 'अहं श्लोकयोजनिकोपायम् तनोमि' इति कर्तृकर्मक्रियान्वयमुक्त्वा 'कोहम्–रघुरामः' कस्मै प्रयोजनाय बालमित्रप्रबोधाय' 'किं कृत्वा–रामं नत्वा' 'कथंभूतं' रामम्–सलक्ष्मणम्' इत्येवं किम्शब्दयोजनया शङ्कामुत्थाप्य चतुर्थ्यन्त-कर्मविभूषितक्त्वान्त–कर्मविशेषण–योजना कार्या इति समुदितार्थः वेदाः प्रमाणम्' मैथिली तस्य दाराः' इत्यादौ नियतलिङ्गनियतवचनस्थले तु यथालिङ्गम्, यथाविभक्ति' इत्यस्य बाध एव ॥

---

पुस्तक मिलनेका ठिकाना–
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" छापाखाना–बंबई.